णीस्थिणः स्थाभ्यासेन व्यवधानेपि इदमयादेशः स्यात् स्थादीनाम् अभ्याससकारस्य च मूर्द्धन्यः
स्यात् श अभितष्ठौ परितष्ठौ सेनय अभिषिषेणयिषति परिषिषेणयिषति सिच् अभिषि
षेचयिषति परिषिषेचयिषति षिव अभिषिषिविषति परिषिषिविषति षञ्ज अभिषिष
ङ्क्षति परिषिषङ्क्षति षञ्ज अभिषिषङ्क्षते परिषिषङ्क्षते षद्लृ निषषाद विषा
षाद स्तम्भु अभितष्टम्भ अवतष्टम्भ स्वन विषष्वाण अवषष्वाण षेधृ परिषेषेध नि
षिषेध विषेषेध स्थादिष्वभ्यासव्यवधाननियमार्थम् १ स्थादिष्वेवाभ्यासस्य यथा स्यात् इह मा भू
त् अभिसुसूषति २ सन्नन्तः सनिग्रहणगुरुलाघवेनैतेनेति निषेधः अवसिसीनिषतीति नियमा
द्गुस्सकारस्य न षत्वम् अस्मान्नियमादभ्याससकारस्य न षत्वम् ॥ अथवा व्यवायोपदेशार्थम्
किमर्थमभ्यासेन चेत्युच्यते इति भाष्यम् न व्यवाये चाषोपदेशार्थम् २ अभ्यासव्यवाये चाषो
पदेशस्यापि यथा स्यात् अभिषिषेणयिषति सेनाशब्दोऽषोपदेशमत्र अवगानिन्याभ्यासार्थेषणि

सू.सि
कौ.३.
२८

प्रतिषेधार्थञ्च १ अपितश्चे अभिषिषिचतीति अत्राभ्यासमपेक्ष्य वत्वान्नसिध्यतीति स्तौतिण्योरेव षण्य।
षणीति नियमात् ॥ सेधतेर्गतौ ८।३।११३। षिधु इत्यस्य धातोर्गत्यर्थस्यावयवस्य सः इत्यस्य
मूर्द्धन्यादेशो न स्यात् गंगां विसेधति अभिसेधति गाः परिसेधति गाः गतौ किम् शिष्यम।
कार्य्यान्निषेधति इत्यादि सर्वस्य सम्भाष्यकृतान्व्याख्यानम् ॥ स्वरतिसूतिसूयतिधूञूदितो
वा ७।२।४४। स्वृ षूङ् षूङ् धूञ् इत्येतेभ्यः ऊ इत्संज्ञकेभ्यश्च परस्य वलादेरार्धधातुकस्य
वा इट् इत्येषः आगमः स्यात् स्वरिता स्वर्त्ता षूङ् अदादिः सविता सोता षूङ् दिवादिः सवि।
ताः सोता धूञ् धविता धोता ऊदितः गाहू गाहिता गाढा गुपू गोपिता गोप्ता स्वरतिसू-
यत्योर्विकरणनिर्देशः षूप्रेरणे इत्यस्य निवृत्त्यर्थः सूतिमात्रं लुग्विकरणनिर्देशो षूविधून
न इत्यस्य निवृत्त्यर्थः नातेनमाहिकल्पाहृद्नोः स्यात् इत्येतद्भवति विप्रतिषेधेन १ इतिका-
शिका लिखिष्यति किति नेट् प्रसंगेऽस्मिन् कितीति नियमः प्रतिषेधो भवति सर्वं विप्रतिषेधे

२८

न २ इति काशिका स्कुत्वा स्तुत्वा ष्टुत्वा वाक्यवचने लिङ्सिचोर्निह्नवार्थम् १ अनुदात्तेद्धि कि
तिवाक्यसङ्गः प्रतिषेधश्च न विधानात् २ लुग्विकरणोऽलुग्विकरणो योऽलुग्विकरणस्य ग्रह
णम् १ परिभाषेयम् ॥ झषस्तथोर्धोऽधः ८।२।४० । झषन्तेभ्यः सोढ्धातोरन्तर्गतवर्णानामस्य
योस्त थ इत्येतयोः स्थाने ध इत्ययमादेशः स्यात् डुधाञ्धातोर्झषः परयोर्न भवति न दुल
भष् लब्धा अलब्ध दुह् दोग्धा अदुग्ध लिह् लेढा अलीढ य अलब्धाः अदुग्धाः अ
लीढाः अधः किम् धत्तः धत्थः अध इति शक्यमवक्तुम् कस्मान्न भवति धत्तः धत्थ इति न्य
स्ये योगविभागः करिष्यते इदमस्ति दध्यस्तथोश्चेति ततो वक्ष्यामि झलो झशः झलां जशो
भवन्तीत्यस्तथोः ततश्चान्ते अन्ते च झलां जशो भवन्ति ततश्चास्तथोरेकांशः झषस्तथोर्धो भविष्य
ति इति भाष्यम् पूर्वत्रासिद्धमिति तस्य भावेन दध्यस्तथोः सिद्धत्वाच्च भवत्येतन्न पौनरुक्त्यं
स्मिन्नसिद्धे दध्यस्तथोर्मिति झषन्तत्वात्तयोर्धत्वाभावः इति कैयटः ॥ झलो झलि ८।२।२६ झल ॥

ह.सी
कौ.उ.
२९
29

परस्य इत्येतस्य किलिपरतो लोपः स्यात् भिदिर् अभित अभित्ताः छिदिर् अछित्त अछित्ताः
फलः किम् अमंस्त अमंस्याः कोटि किम् अभित्सातां अभित्सत इत्येनापि सिचपवलो
पत्नेनसोमस्त नस्लोना हृषतस्थानमित्यत्र नलोपः इत्यादि षट्सूत्राणि भाष्यकृतानव्याख्या
तानि ॥ अतउपधायाः ७।२।११६ अङ्गावयवस्योपधा भूतस्य अ इत्येतस्य ञिति णिति
च प्रत्यये परे वृद्धिः स्यात् ञिति पाकः पाठः सागः पागः णिति पाचयति पाठयति
पाचकः पाठकः अतः किम् भेदः भेदकः उपधायाः किम् चकास्यति ॥ इदं सूत्रम् भाष्य
कृतानव्याख्यातम् ॥ णलुत्तमोवा ७।१।९१ णल् उत्तमपुरुषसंज्ञको णिद्वा स्यात् अ
हम् चकार अहं चकार अहं पपच अहं पपाच उत्तमः किम् स पपाच इत्यादि सूत्र
मपि तु भाष्यकृतानव्याख्यातम् ॥ अतो हलादेर्लघोः ७।२।७ हल् प्रत्याहारादेर्ल
घ्वकारस्य इत्येतस्य ह्रस्वादौ सिचि परस्मैपदेषु परतो वृद्धिर्वा स्यात् कण अकाणीत् अका

२९

ग्नीत् अतः किम् अदेवीत् हलादेः किम् माभवानटीत् लघोः किम् अतक्षीत् इडादौ किम् अपाक्षीत् ॥ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहति शाम्यतिचिनोतिदेग्धिषु च ८।४।१७ ॥ नि इत्येतस्योपसर्गस्थावयवस्य इत्येतस्योपसर्गस्थाद्रकारात्परस्य इत्येष णादेशः स्यात् गद णद पत्लृ पद घुसंज्ञकाः मा षो हन या वा द्रा प्सा डुवप् वह शमगणपन्नः चिञ् दिह इत्येतेषु धातुषु परतः गद प्रणिगदति परिणिगदति णद प्रणिनदति परिणिनदति पत्लृ प्रणिपतति परिणिपतति पद प्रणिपद्यते परिणिपद्यते घुशब्देन घुसंज्ञकाः षड् धातवः गृह्यन्ते डुदाञ् प्रणिददाति परिणिददाति दाण् प्रणियच्छति परिणियच्छति दो प्रणिद्यति परिणिद्यति देङ् प्रणिदयते परिणिदयते धेट् प्रणिधयति परिणिधयति डुधाञ् प्रणिदधाति परिणिदधाति माशब्देन माङ् मेङ् ग्रहणम् माङ् प्रणिमिमीते परिणिमि

सू.सी
को.३.
२०
30

मीते मेङ् प्रणिमयते परिणिमयते षो प्रणिष्यति परिणिष्यति हन प्रणिहन्ति परिणि
हन्ति या प्रणियाति परिणियाति वा प्रणिवाति परिणिवाति द्रा प्रणिद्राति परिणि
वपति वह प्रणिवहति परिणिवहति शम प्रणिशाम्यति परिणिशाम्यति चिञ प्रणि
चिनोति परिणिचिनोति दिह प्रणिदेग्धि परिणिदेग्धि माङिति माङ्मेङोर्ग्रहणमिष्य
ते १ इतिकाशिका नेर्गदादिष्वड्व्यवाय उपसंख्यानम् १ प्रण्यगदत् प्रण्यनदत् अड्व्य
वायेपि नेर्गदादिषु णत्वमिष्यते २ इतिकाशिका आङा चेति वक्तव्यम् २ प्रण्यागदत् प्र
ण्यानदत ॥ णो नः ६।१।६५ उपदेशे यो धातोर्णकारस्तस्य नकार आदेशः स्यात णीञ्
नयति णम नमति उपदेशे किम् णकारयति धात्वादेः किम् अणति केपुनर्णोप
देशाः येन धातवः पठ्यन्ते नामधातोरप्यपि नेष्यते सर्वे नादयो णोपदेशाः नृतिनन्दिनर्दि
नक्किनाटिनाथृनाधृनृवर्जम् ॥ उपसर्गादसमासेपि णोपदेशस्य ८।४।१४। उप

२.

सर्गीमेतस्य स्याद्भकारामास्य उपदेशावस्यायोणकारवतोधातोरवयवस्य न् इत्येतस्यण् इ
त्येषयादेशः स्यात् असमासेऽपि समासेऽपि असमासे णमु प्रणमति परिणमति।
णद प्रणदति परिणदति समासे प्रणायकः परिणायकः प्रपिणिमति प्रणादकः
परिणादकः उपसर्गात्किम् प्रगतानायकाग्रमादेशात्प्रनायकोदेशः पूर्वपदाधिकारान्ति
ह्निति पोतनार्थमसमासेऽपीति णोपदेशस्य किम् प्रनर्दति प्रनर्दकः णोपदेशस्य किम्।
उपसर्गाभावादनिर्देशः । वचनप्रमाणपादिनिवेम्पदेलोपप्रतिषेधोवक्तव्यः २ प्रगता।
नायकाअस्माद्ग्रामात्प्रनायकोग्रामः सिद्धं तु यमग्रस्य उपसर्गास्तत्स्य सेतिवचनात् २ सि
द्धेति स्वचनर्द्विभिघने यथासमासमेवास्य नत्वोक्तम् णोपदेशमध्ये उपसर्गाभावादनि
र्देशइति नैषदोषः नैवंविज्ञायते णउपदेशोणोपदेशः णोपदेशस्येति किं तर्हि णउपदे।
शोऽस्यसोयंणोपदेशः णोपदेशस्येति इतिभाष्यम् उपसर्गग्रहणस्यमाभूत्प्रेणायेनमि।

पृ.सि
कौ.३.
३१
31

तिमुखार्थग्रहणायबहुव्रीहिराश्रीयते इतिकैय्यटः ॥ तस्मान्नुड्द्विहलः ७।४।७१। दीर्घाद
भ्यासस्याः कारान्परस्य द्विहल्नुकस्य धातोर्नुट् इत्येषआगमः स्यात् अर्द्ध आनर्द आ
नर्दतुः आनर्दुः अगि आनंग आनंगतुः आनंगुः द्विहलः किम् आट आटतुः आटुः अस
ऽयैकदेशः स्येरकस्य हल्त्वेन ग्रहणाद्द्विहल्त्वाप्यनुड्ऽः ऋधुः आनृधतुः आनृधुः ॥ आदिर्ञिटु
डवः १।३।५। संज्ञाप्रदेशाः उपदेशेयानोगायाञिटुडव इत्येते इत्संज्ञाः स्युः ञिन्दी इष्टः टुओ
श्वि श्वयथुः डुपचष् पक्त्रिमम् उपदेशे किम् ञिकारीयति आदिः किम् कण्डूयति भा
ष्यत्वेनेदं व्याख्यातम् ॥ अभ्यासस्यासवर्णे ६।४।७८। इ उ इत्येतयोरभ्यासावयवयोरस
वर्णेऽचि परे इयङ् उवङ् इत्येतावादेशौ भवतः इयेष उवोष असवर्णे किम् इयतुः इयुः ऊ
षतुः ऊषुः अचि किम् इयाज उवाच इत्यादिसूत्रवतष्ठर्ये भाष्येतन्नव्याख्यातम् वार्णादा
ङ्गं बलीयः १ परिभाषेयम् ॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यश्नुश्च ३।१।८२। स्तम्भु स

३१

म्रुः सौत्रो धातुः म्रुचु म्लुचु ग्रुचु ग्लुचु ग्लुञ्चु टुओश्वि इत्येतेभ्यः परस्य च्लेरङादेशो वा
स्यात् अजरत् अजारीत् अस्तभत् अस्तम्भीत् अम्रुचत् अम्रोचीत् अम्लुचत् अम्लोचीत् अ
ग्रुचत् अग्रोचीत् अग्लुचत् अग्लोचीत् अग्लुचत् अग्लुञ्चीत् अशिश्वियत् अश्वयीत् अ
श्वत् इदं ग्लुचिग्रहणं ग्लुञ्चिग्रहणं वादिः क्रियते अन्यतरच्छक्यमकर्तुम् इति भाष्यम् ॥ अ
जेर्व्यघञपोः २।४।५६। अज इत्येतस्य धातोर्वी इत्ययमादेशः स्यात् आर्द्धधातुके घञ
अपौ वर्जयित्वा प्रवायकः प्रवयणीयम् अघञपोः किम् समाजः समजः दीर्घो वा
रणं किम् प्रवीतः घञपोः प्रतिषेधे क्यप उपसंख्यानम् वलादावार्द्धधातुके वेष्यते । वेता
अजिता वेष्यति अजिष्यति नार्थ उपसंख्यानेन नाघञपोरिति प्रतिषेधेन इदमस्ति
चादिः ख्योजवा लिडीति तन्नो वक्ष्यामि अजेर्वीभावो भवति वा व्यवस्थितविभाषा चेति इति
भाष्यम् ॥ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३॥ डुकृञ् सृ डुभृञ् वृङ् वृञ् ष्टुञ् द्रु

शृ॰ पी
कौ॰ ३॰
३२

स्व स्तु इत्येतेभ्यः परस्य लिटइडागमो न स्यात् कृञ् चकृव चकृम स्तृ सस्तृव सस्तृम द्रुस्र
ञ् बभृव बभृम वृङ् ववृवहे ववृमहे वृञ् ववृव ववृम ष्टुञ् तुष्टुव तुष्टुम द्रु दुद्रुव दु
द्रुम स्रु सुस्रुव सुस्रुम श्रु शुश्रुव शुश्रुम ॥ कृसृभृ इत्येतेषामनुदात्तत्वादेकाच इति
प्रकृत्याश्रयेण निषेधे प्राप्ते वृङ् वृञोस्तु श्र्युकः किति इति प्रसज्याश्रयेण निषेधे प्राप्ते नियमार्थं च।
तत्र्यैकादीनामुपादानम् प्रकृत्याश्रयः प्रसज्याश्रयो वा इति निषेधो लिटि चेत्कादिभ्य एव।
नान्येभ्य इति ततश्च तरीयो लिमारद्वाज नियम प्रापित स्वरमादिभ्य कादि नियम प्रापितस्य
वेटो निषेधार्थमुपादानम् कृञो ऽसुटः १ इदमास्त संचस्कारिव संचस्करिम कृञो ऽसुट
इति वक्तव्यम् १ समुपस्कृस्य इगागमार्थम् इति काशिका ऋतो भारद्वाजस्येतद्यथासट एव वेष्य।
ते २ इति काशिका संचस्करिथ तत्र इड्वक्तव्यम् न वक्तव्यम् गुणो ऋतेऽपि अनेन चाग्रनुगन्तत्वादि
ट्प्रतिषेधो न भविष्यति एवमप्युपदेशाधिकारात्त्वामेति तस्मात् सुट इति वक्तव्यम् इति भाष्ये

३२

म ॥ अचस्तास्वत्थल्यनिटो नित्यम् ७।२।६१ तासिप्रतिषेधे ये नित्याः अनिटो धातवो ऽजन्तास्तेभ्य
स्तासाविव थलि इट् इत्येष आगमो न स्यात् या याता ययाथ चि चेता चिचेथ अचः किम्
भेत्ता बिभेदिथ तास्वत् किम् लविता लुलविथ थलि किम् ययिव ययिम नित्यं किम् तासि
विभाषेटः थलि नित्यमिष्य एव स्यात् धविता धविता दुधविथ तासौ मन् थलि प्रतिषेधार्थं वति
निर्देशः अनेन स्तोत्यादेशे वेञो वाय्यिणादेशे ऽनाद्यैर्भवति अतस्तस्मान्नेट् प्रतिषेधः उवचसि उव
यिथ ॥ उपदेशे ऽत्वतः ७।२।६२ उपदेशे ऽकारवान्यो धातुस्तासौ नित्यानिट् ततः प-
रस्य तासाविव थलि इट् इत्येष आगमो न स्यात् उपदेश पक्ता पपक्थ यष्टा इयष्ठ उ
पदेशे किम् क्रष्टा चकर्षिथ अतः किम् भेत्ता बिभेदिथ तपरकरणं किम् राद्धा र
राधिथ तास्वदित्येव जिघृक्षति जग्रहिथ नित्यानिटः किम् अञ्जू अञ्जिता आनञ्जिथ आ
नञ्जिथ तासाववत्यादिप्रतिषेधे यमेः प्रतिषेधः समहृाः ऽकारवत्वात् ८। मिध्ननुदलादिग्रहणम्

सू-त्ति
कौ-उ.
३३
33

२ क्रियमाणेऽपि वेड्लादिग्रहणेऽत्रप्राप्नोति जक्षिथ पपाथिड्लादिरिति भाष्यम् ॥ ऋतो
भारद्वाजस्य ७।२।६३ ऋ इत्येतदन्ताद्धातोस्तासौ नित्यानिटः परस्य थल इट् इत्येषआगमो नस्या
त् भारद्वाजाऽऽचार्यमते सर स्मर्ता सस्मर्थ ध्व ध्वर्ता दध्वर्थ भारद्वाजमतेः मेषांपातस्तना।
मिट् ययिथ पेचिथ नियमार्थोऽयमारम्भः ऋत एव भारद्वाजस्य नान्यतो भारद्वाजस्येति
क्रमास्म्रत पपिथ ववियथेति इतिभाष्यम् ऋतो भारद्वाजस्येति नियमानुपपत्तिः प्राप्तमन्या
नित्यमुपदेशे अत्वतः थपस्य १ तत्र पचादिभारद्वाजवचनम् २ पेचिथ शेकिथ एवन्तर्हि योग।
विभागात्सिद्धम् अचस्तास्वत्थल्यनिटो नित्यमुपदेशे अत्वतः अन्नतश्चोपदेशइति इतिभा
ष्यम् ॥ सिचि वृद्धिः परस्मैपदेषु ७।२।१। इकन्तस्याङ्गान्तस्याऽङ्ग. सपरस्मैपदपरको
सिचि परे वृद्धिः स्यात् चिञ् अचैषीत् लूञ् अलावीत् डुकृञ् अकार्षीत् परस्मैपदेषु कि
म् मुङ्. अच्योष्ट सिचि वृद्धावोकारप्रतिषेधः १ आकाराद्वृद्धिर्विप्रतिषेधेन आकाराद्धि।

३३

द्धिर्विप्रतिषेधेनेतिचेद्गतामावः १ पुनःप्रसङ्गविज्ञानाद्वासिद्धम् ४ ॥ अकृत्सार्वधातु-
कयोर्दीर्घः ७।४।२५ अजन्ताङ्गस्य इस्यतद्धितादौ क्ङितिप्रत्ययेपरेदीर्घः स्यात् नतुकृ-
त्सार्वधातुकयोः क्ङिति ईयात् स्तूयात् चीयते स्तूयते ङिति चे चीयते गाष्ठ्यते भृ-
शायते सुखायते अकृत्किम् प्रकृत्य नकः परत्वाद्दीर्घः स्यात् असार्वधातुकेकिम् चिनु-
यात् क्ङितिकिम् एस्तुया इत्यादिसूत्रद्वन्द्वभाष्यकृतानव्याख्यातम् ॥ लिङ्सिचावा-
त्मनेपदेषु १।२।११। इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्त आत्मनेपदेपरेषुपरेषु
भित्सीष्ट भुत्सीष्ट अभित्त अबुद्ध इकः किम् यक्षीष्ट अयष्ट आत्मनेपदेषुकिम् अस्त्राक्षीत्
हलः किम् चेषीष्ट अचेष्ट ॥ तृफलभजत्रपश्च ६।४।१२२। तृ फल भज त्रप इत्येतेषा-
मस्य इत्येतस्य एत्वमादेशः स्यात् अभ्यासलोपश्च किति लिटि थलि वा परे तृ तेरतुः तेरुः
तेरिथ फल फेलतुः फेलुः फेलिथ भज भेजतुः भेजुः भेजिथ त्रप त्रेपे त्रेपाते त्रेपिरे अ

थेऽतिवक्तृभम् १ अथन्तः अथुः अयिथ इत्येतत्त्रं भाष्येनव्याख्यातम् ॥ रयितमोऽशवि ७।२

।६९। उप जभी इत्येतयोरजादौ प्रत्यये परे नुमस्यात् रन्धयति रन्धकः जम्भयति जम्भकः

परामपि हर्दिवायित्वानित्यत्वाभम् अचिकिम रह्या जप्या ॥ गुपूधूपविच्छिपणिपनिभ्य

आयः ३।१।२८। गुपू धूप विच्छ पण पन इत्येतेभ्यो धातुभ्य आयप्रत्ययः स्यात् स्वा(

र्थे गोपायति धूपायति विच्छायति पणायति पनायति पनथातोः स्तुतावेव आ।

प्रत्ययान्तादात्मनेपदं भवति इत्यादि सूत्रस्थं भाष्येतुनव्याख्यातम् ॥ सनाद्यन्ताधात

वः ३।१।३२। संज्ञाप्रदेशः ॥ सनादयः कमेर्णिङ् न्ताः प्रत्ययाअन्ते येषां ते धातुसंज्ञा

भवन्ति चिकीर्षति पुत्रीयति पुत्रकाम्यति ॥ आयादयआर्द्धधातुके वा ३।१।३१।

ऋतेरीङा आय ईयङ् णिङ् इत्येते प्रत्यया आर्द्धधातुक विषये वा भवन्ति गोप्ता गोपायिता

अर्तिता ऋतीयिता कमिता कामयिता ॥ कास्प्रत्ययादाममन्त्रेलिटि ३।१।३५। का

मू.पी.
कौ.द.
३४
34

३४

कृ इत्येतस्माद्धातोः प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययः स्याल्लिटि परे न तु मन्त्रे कासांच
क्रे प्रत्ययान्तेभ्यः लोलूयांचक्रे अमन्त्रे किम् हंस्मो नो नाव आमो मकारस्येत्संज्ञा न भ(
वति कास्यामविधानसामर्थ्यात् कासग्रहणं च कासृ उपसंख्यानम् २ कास्यनेकाच
इति वक्तव्यम् १ चुलुम्पांचकार दरिद्रांचकार कास्यनेकाज्ग्रहणं कर्तव्यम् १ ॥ अतो
लोपः ६।४।४८। अ इत्येतदन्तस्याङ्ग॰स्याऽऽर्धधातुकविषये लोपः स्यात् चिकीर्षि
ता चिकीर्षितुम् चिकीर्षितव्यम् अतः किम् चेता स्तोता तपरकरणं किम् याता वा
ता आर्धधातुके किम् हदतनम् एष लोपो वियङ्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधे
न १ वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन १ इति काशिका चिकीर्षकः चिकी
र्षिते सर्वत्र हि पूर्वविप्रतिषेधो वक्तव्य न वक्तव्यः इष्टवाची परशब्दः विप्रतिषेधे परं यदिष्टं तद्भ
वतीति इति भाष्यम् ॥ कमेर्णिङ् ३।१।३० कम् इत्येतस्माद्धातोर्णिङ् स्यात् कामयते।

कामयेते कामयन्ते णिकारो ऽनुबन्धार्थः ङकारश्चात्मनेपदार्थः ॥ अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।
५५ ॥ आम् अन्त आलु आय्य इत्नु इष्णु इत्येतेषु परेषु णेरयादेशः स्यात् आ-
म् कारयाञ्चकार अन्त गण्डयन्तः आलु स्पृहयालुः आय्य स्पृहयाय्यः इत्नु स्तनयित्नुः
इष्णु पोषयिष्णुः कृत्वाविधिणिगुणवचनम् १ इत्नोपस्थ्यान्तरकरणम् २ अयादेशे चाप-
संख्यानम् ३ उभयं क्रियतेऽस्मामपत इति भाष्यम् ॥ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८
सिवोः प्रवादः ण्यन्तेभ्यो धातुभ्यः श्रिञ् द्रुस्रु इत्येतेभ्यश्च परस्य च्लेरित्येतस्य चङ् इत्ययमा-
देशः स्यात् कर्तृवाचिनि लुङि परे अचीकरत् अजीहरत् अशिश्रियत् अदुद्रुवत् असु-
स्रुवत् चङ्गे ङकारो गुणप्रतिषेधार्थः चकारः श्रीति विशेषणार्थः कर्तरि किम् अ-
कारयिषातां कटौ देवदत्तेन णिश्रिद्रुस्रुभ्यः कमेरुपसंख्यानम् १ अचकमत णिङ् इत्यु अ-
चीकमत कमेश्च्लेश्चङ् वक्तव्यः २ कर्मकर्तरि ३ ॥ णेरनिटि ६।४।५१ णीङ् णिच्

इत्यनयोरनिग्लोपावाः॥ ईयानके परे लोपः स्यात् चुपेत्युच्छन्त अचुचुरत् अनिरीकिम् कारयि-
ता ॥ णौचङ्युपधाया ह्रस्वः ७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् उकाच्
अचीकरत् अचीकरत लूञ् अलीलवत् अलीलवत् अङ्वचनसामर्थ्यादन्तरंगमपि वृद्धिं
बाधित्वा ह्रस्वे कृते गुणस्य वृद्ध्या बाधितत्वात् प्रहते रूवङ् प्रसज्येत अदीदपदित्यत्र ह्रस्वेन पुको
बाधः स्यात् अपीपचदित्यादौ तन्नैव स्यात् वृत्ति० किम् कारयति उपधायाः किम् अचकांक्ष-
त उत्तरार्थमुपधाग्रहणम् णौचङ्युपधाग्रहणमेतत्प्रतिषेधार्थम् १ उत्तरार्थं तत्र्युपधा-
ग्रहणं कर्तव्यम् २ उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानं कर्तव्यम् १ उपधाह्रस्वत्वे णेर्णिच्युप-
संख्यानम् १ ॥ काशिका वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन णेणा-
कृतं निर्देशात्सिद्धम् इति काशिका ॥ वृत्ति० ७।४।२ ॥ चङ्प्रत्यये परे ऽनभ्यासस्य धातोरव-
यवस्य प्रथमस्यैकाचो द्वे भवतः अजादेस्तु द्वितीयस्यैकाचः अपीपचत् अदिदत् ॥ सन्वल्

सि॰ कौ॰
कौ॰ उ॰
३९
36

ङुनि चङ्परेऽनग्लोपे ७।४।९३ चङ्परे णिप्रत्यये परे यदङ्गं तदन्तस्य लघुपरस्याऽभ्यास
स्य सन्प्रत्यये परत इव कार्यं स्यात् णिच्यः ग्लोपेऽसति सन्वदित्युक्तम् चङ्परे णावपि भवति।
डुकृञ् अचीकरत् डुपचष् अपीपचत् कमु अचीकमत लूञ् अलीलवत् लघुनि किम् अतत
क्षत् अततक्षत् चङ्परे किम् अदम्पपत् परस्य ह्रस्वाकिम् केवले चङि मा भूत् अचकमत अन।
ग्लोपे किम् अववथत् सन्वद्भावदीर्घेत्वे णौ णिच्युपसंख्यानम् । वादितवन्तम्प्रयोजितवान् अवी
वदद्वीणाम्परिवादकेन मीमादीनान्तु लोपप्रसङ्गः २ अमीमपत् सिद्धन्तरूपाऽनिदेशात् २
सनि यत् शमभ्यासरूपन्तत्सन्वद्भावेनाऽतिदिश्यते न च मीमादीनां सनि अभ्यासरूपमस्ति ॥ स
न्यतः ७।४।७९ सन् इत् तस्मिन् प्रत्यये परे अतदन्तस्याऽभ्यासस्य इत्ययमादेशः स्यात्।
डुपचष् पिपक्षति यज यियक्षति स्था तिष्ठासति पा पिपासति सनि किम् पापच अ
तः किम् लुलूषति सनि ग्रहगुहोश्चेतीमिडादि प्रतिषेधः तपरकरणं किम् पापच्यतेः पापचिप
ते ॥

३९

दीर्घो लघोः ७।४।९४ चङ्. परणिचि प्रत्यये परे यदङ्गं तस्य लघुपरस्य लघोरभ्यासस्य दी॥
र्घः स्यात् चङ्.परे णावग्लोपे सति डुकृञ् अचीकरत् हृञ् अजीहरत् लूञ् अलीलवत् डु
पचष् अपीपचत् लघोः किम् अविभ्रजत् लघुनि किम् अततक्षत् अग्लोपे किम् अचक
थत् इत्यादि सर्वत्र चतुष्टयं भाष्यकृता न व्याख्यातम् ॥ ये विभाषा ६।४।४३ । ये इति सन्दा॥
शिके क्ङिति ङि. ति च प्रत्यये परे जनसनखनाम् आत्वं वा स्यात् जायते जन्यते जाजायते संसन्यते

७।३।७५ खायते खन्यते चाखायते चंखन्यते इत्यादि सर्वत्र वक्तव्यं भाष्ये तु न व्याख्यातम् ॥ ष्ठिवुक्लमुच
मां शिति ॥ ष्ठिवु क्लमु चम इत्येतेषां धातूनां शिति प्रत्यये परे अचो दीर्घः स्यात् ष्ठिवु ष्ठीवति
क्लमु क्लामति चम आचामति क्लमियहणं शब्विकल्पार्थम् शपनिति पूर्वसूत्रेणैव सिद्धम् दी
र्घतेआङि चम इति वक्तव्यम् । आचामति चमेराङ्. पूर्वस्य ग्रहणम् । इति काशिका आ॥
ङि चम इति वक्तव्यम् । विचमति ष्ठिवुक्लम्याचमां शिति इत्ययं सूत्रपाठ काशिकायाम् ॥ ॥

सू.गि.
को.उ.
३७
37

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०। भ्राशभ्लाशविभाषेयम् टुभ्राशृ टुभ्ला-
शृ भ्रमु क्रमु क्लमु त्रसी त्रुट लष इत्येतेभ्यो धातुभ्यः श्यन्वा स्यात् भ्राश्यते भ्राशते भ्ला-
श्यते भ्राम्यति भ्रमति भ्रामति क्राम्यति क्रामति त्रस्यति त्रसति त्रुट्यति त्रुटति लष्यति
लषति ॥ क्रमः परस्मैपदेषु ७।३।७६। इत्येतस्य धातोरचः परस्मैपदपरे शिति परे दीर्घः स्या-
त् क्रामति क्रामतः क्रामन्ति परस्मैपदेषु किम् क्रमते इदं सूत्रम्भाष्ये तु न व्याख्यातम् ॥
स्नुक्रमोरनात्मनेपदनिमित्ते ७।२।३६ स्नु क्रमु इत्येताभ्यां परस्य वलादेरार्धधातुकस्येट् इत
षड्यागमः स्यात् स्नुक्रमौ यदात्मनेपदनिमित्ते न भवतः प्रस्नविता प्रस्नवितुम् प्रक्रमिता
प्रक्रमितुम् अनात्मनेपदनिमित्ते किम् भावकर्मकर्तृकर्मव्यतिहारेषु मा भूत् क्रमेर्हि
स्यादिष्वेव प्रस्नोष्यति प्रक्रंस्यते निमित्तग्रहणं किम् सीयुडेकादेशस्यान्तरङ्गस्य च प्रतिषे-
धार्थम् स्नुक्रमोरनात्मनेपदपरप्रतिषेधेन सम्परसीयुडेकादेशस्य प्रतिषेधो वक्तव्यः २

३७

२ आत्मनेपदपरः स्मत्तस्य सन्निति सिच्नल्य यथानात्मनः इट् प्रतिषेधो न प्राप्नोति प्रस्तुस्थिषिष्य
ते पाँचिकंसिष्यते सीडुदि प्रस्तोषीष्ट प्रकंसीष्ट एकादेशप्रस्तोष्यन्ते प्रकंस्यन्ते सिद्धन्तु से[?]
ग्रात्मनेपदेन समानपदस्थस्य इट्प्रतिषेधात् १ कमेश्चात्मनेपदेन समानपदस्थस्येण्न भवती(
निवक्तव्यम् ४ कमेस्तु कर्तर्यात्मनेपदविषयादन्यत्रात्मनेपदेऽपि प्रतिषेधो वक्तव्यः १ इति
काशिका प्रक्रान्ता उपक्रान्ता कर्तरीति किम् प्रक्रमितव्यम् उपक्रमितव्यम् कर्तरि चात्मनेपदवि
षयात् कृति प्रतिषेधः ५ ॥ दयायासश्च ३।१।।३७ ।दय अय आस इत्येतेभ्यश्च आम् स्या
त्लिटि परे दयांचक्रे अयांचक्रे आसांचक्रे भाष्येऽनुव्याख्यातम् ॥ विभाषेटः ८।३।७९॥
इणः परस्माद्यान्तर्गतवर्णीतरोयदिटागमस्तस्मात्परे षीध्वं लुङ् लिट् इत्येतेषामवयवस्य ध
इत्येतस्य मूर्धन्य आदेशो वा स्यात् चोषम् लविषीढ्वम् लविषीध्वम् लुङ् अलविढ्वम् इं[?]दस्तु[?]।
नभ्यास्य भाष्यकृता एवं सूत्रेण सहैव व्याख्यातम् ॥ उपसर्गस्यायतौ ८।२।१९ । अय इत्येतस्मि।

सि·की
कौ·उ·
२८
38

यतौ परत उपसर्गस्थस्य रः इत्येतस्य ल् इत्ययमादेशः स्यात् प्लायते पलायते रेफस्यायतावित
वैय्यरेरूपसंख्यानम् १ पल्ययते उपसर्गस्येति चेदेकादेशोऽप्रसिद्धिः २ प्लायते पलायते एका
देशकृते वापवर्गाभावादयतावितिलत्वन्न प्राप्नोति ॥ लिड्यङोश्च ६।१।२९ ॥ ओप्यायी इ
त्येतस्य लिटि यङि च परे पी इत्ययमादेशः स्यात् लिट् पिप्ये पिप्याते पिप्यिरे परयीभावे कृतेऽनु
नः सम्प्रसा· वितानादित्वम् परनेकाच इतियण् यङ् पेपीयते पेपीयेते भाष्ये त्वनेदं व्याख्यात
म् ॥ इत्येतस्माद्धातोः परस्य च्लेः इत्येतस्य चिण् इत्ययमादेशः स्यात् दीपजनबुधपूरितायिप्या
यिभ्योऽन्यतरस्याम् ३।१।६१। दीपी जनी बुध पूरी ताय् ओप्यायी इत्येतेभ्यः परस्य च्ले
श्चिणादेशो वा स्यात् तशब्दे परे अदीपि अदीपिष्ट जनी प्रादुर्भावे न तु जनजननने अजनि
अजनिष्ट बुध अवबोधने इति स्मर्यते न तु बुध बोधने अबोधि अबुद्ध अपूरि अपूरिष्ट अतायि
अतायिष्ट अप्यायि अप्यायिष्ट इत्यादिस्त्वत्र पञ्चकं भाष्ये तन व्याख्यातम् ॥ चिणो लुक् ६।४।
१०४

२८

गीत् इत्येतस्मात्परस्य प्रत्ययस्य लुक् स्यात् अकारि अहारि अलावि चिणो लुकि तग्रहणम् १
संघातस्य माभूत् अकारितराम् चिणो लुकि तग्रहणमनर्थकं संघातस्याऽप्रत्ययत्वात् २ त
लोपस्य चाऽसिद्धत्वात् ३ असिद्धस्तलोपस्तस्याऽसिद्धत्वान्न भविष्यति इति भाष्यम् ॥ अतो ल्
रान्तस्य ७।२।२। ल् र् इत्येतयोरकारस्य समीपवर्तिनोऽतः ल्रन्तस्याऽङ्गस्य अतो वृद्धिः स्यात् सि
चि परस्मैपदेषु ज्वल अज्वालीत् ह्मल अह्मालीत् दर अदारीत् त्सर अत्सारीत् अतः
किम् धुर् अधोरीत् मील अमीलीत् लरान्तस्य किम् माभवानटीत् अन्तग्रहणं किम्
वम अवमीत् स्खल अस्खलीत् अत्र योर्ल्रोरकारसमीपो न तदन्तमङ्गम् यावन्तौ ल्रौ न
तावतः समीपौ ॥ सन्लिटोर्जेः ७।३।५७। जि इत्येतस्य धातोरभ्यासात्परस्य सन्लिटोः प
रयोः कवर्गादेशः स्यात् सनि जिगीषति लिटि जिगाय सन्लिटोः किम् जेजीयते जिग्रह
णोऽपः प्रतिषेधः १ जिगमनः जिष्णुः जेतव्यः लक्षणप्रतिपदोक्तयोरिति वचनात्तस्य न भविष्य

ति इति भाष्यम् ॥ धिन्विकृण्व्योर च ३।१।८०। धिवि कृवि इत्येतयोरुप्रत्ययः स्या
त् तयोश्चाकारोऽन्तादेशः स्यात् धिनोति कृणोति अतो लोपस्य स्थानिवद्भावाद्गुणो न
भवति धिन्विकृण्व्योरिति वक्तव्यम् १॥ लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७ उकारोऽप्र
त्ययावयवोऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्य लोपो वा स्यात् म् व् इत्येतयोः प्रत्यययोः पर
तः चिन्वः चिनुवः चिन्मः चिनुमः सुन्वः सुनुवः प्रत्ययावयवः किम् युवः युमः असं
योगपूर्वः किम् शक्नुवः लोपग्रहणमुत्तरार्थम् इत्यादिसूत्रत्रयं भाष्ये तु न व्याख्यातम् ॥
उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६। उकारो यः प्रत्ययावयवोऽसंयोगपूर्वस्तदन्ताद
ङ्गात्परस्य हि इत्येतस्य लुक् स्यात् तनु चिनु कृणु कुरु उतः किम् लुनीहि प्रत्ययात् किम्
युहि असंयोगपूर्वात् किम् आप्नुहि उतश्च प्रत्ययाच्छन्दो वा वचनम् १ अवस्थिरा तनुहि धि
नुहि यज्ञं विधिनुहि यज्ञपतिम् तेन मा भागिनं कृणुहि ॥ ढो ढे लोपः ८।३।१३। ढ इते

सि. कौ. ३.
२१
39

२१

तस्य छ इत्येतस्मिन्परे लोपः स्यात् गाढ् गाढा आगाढ गूढ् उपगूढम् लिट् लीढम् ष्टुत्व
स्याऽसिद्धत्वाद्ढत्वम् पदस्येतीह नसंबध्यते पदान्तस्य ढस्याऽसंभवात् ढलोपेऽप
दान्तग्रहणम् १ इदमाश्चत्र स्वलिड्ढौकते गुडलिड्ढौकते सत्वर्द्विवक्तव्यम् नवक्तव्यम्
जश्त्वमपवादकमवविष्यति इतिभाष्यम् जशत्ववादिनिचेदत्तरस्य ढस्याऽभावादपवादश्च
ग्रहः २ जश्त्वस्यासिद्धत्वात् ३ ष्टुत्वस्यासिद्धत्वात् स ग्रहणावा ४
तत्र द्विवक्तव्यम् नवक्तव्यम् आनन्तर्यमिदाश्रीयते ढकारइति इतिभाष्यम् ॥ शलइगु
पधादनिटःक्सः ३।१।४५ शलन्तो यो धातुरिगुपधस्तस्मात्परस्य च्लेः इत्येतस्य क्स इत्यादेशः
स्यात् दुह् अधुक्षत् लिह् अलिक्षत् शलः किम् अभैत्सीत् इगुपधात्किम् अधाक्षीत्
अनिटः किम् अकोषीत् ॥ क्सस्याचि ७।३।७२ क्स इत्येतस्य अजादौ प्रत्यये परे लोपः स्यात्
अधुक्षाताम् अधुक्षायाम् अधुक्षि अचिकिम् अधुक्षत् करतिकिम् वत्साः इत्यादिसूत्रत्र।

इ.लि
कौ.३.
५०
50

भाषितव्याख्यातम् ॥ अदोऽन्यतरस्याम् ३।२।७५ । अद इत्येतस्माद्धौवादिकात् सुप्रत्य-
यो वा स्यात् अदोगाति अदति ॥ तन्दकरणे तन्दः ३।२।७६ ॥ तन्द इत्येतस्मात्तन्दकरणेऽर्थे व-
र्तमानात् सुप्रत्ययो वा स्यात् तन्दोगाति तन्दतिकाष्ठम् तन्दकरणे किम् सन्तनति वाग्भिः
अनेकार्थत्वाद्धातूनां विशेषणोपादानम् ॥ तीषसहलुभरुषरिषः ७।२।४८॥ इषु षह
लुभ रुष रिष इत्येतेभ्यः परस्य तकारादेरार्धधातुकस्य वा इड् इत्ययमागमः स्यात् एषि-
ता एष्टा इषुरिच्छायामित्यस्याऽयं विकल्प इष्यते दिवादिक्र्यादिपठितयोरिषधातोः इत्येतस्य तु
एषिता सहिता सोढा लोभिता लोब्धा रोषिता रोष्टा रेषिता रेष्टा तीति किम् एषिष्यति
इत्यत्र कारान्तत्वादप्रतिषेधः १ इट्समासत्र प्रेषिता प्रेषितम् प्रेषिष्यम् ॥ उषविदजा-
गृभ्योऽन्यतरस्याम् ३।१।३८॥ उषदाहे विद ज्ञाने जागृ इत्येतेभ्य आम् वा स्याल्लिटि परे आ-
मंचकार उवोष विदांचकार विवेद जागरांचकार जजागार विदामकित १ विदिरकारा।

५०

न्तस्यामसन्नियोगेन इतिभाष्यम् ॥ सः स्यार्द्धधातुके ७।४।४९। स इत्येतदन्तस्याऽङ्ग-
स्य इत्येतदादावार्द्धधातुके परेत इत्ययमादेशः स्यात् वस वत्स्यति अवत्स्यत् विवत्सति घ
स्लृ जिघत्सति सस्य किम् वच मा दै किम् वासः वासः आर्द्धधातुके किम् आस्से वस्से
इत्यादि पञ्च सूत्राणि भाष्यकृता न व्याख्यातानि ॥ पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।
१।५५ पुष इत्यादिभ्यः द्युत इत्यादिभ्यः ऌकारेत्संज्ञकेभ्यश्च धातुभ्यः परस्य च्लेः अङादे
शः स्यात् परस्मैपदेषु दिवाद्यन्तर्गणः पुषादिर्गृह्यते न तु भ्वाद्यन्तर्गणः नापि क्र्याद्यन्तर्गण
अपुषत् अशुषत् द्युतादिर्भ्वाद्यन्तर्गणः अद्युतत् अश्वितत् ऌदितः गम्लृ अगमत् पर
स्मैपदेषु किम् अद्योतिष्ट ॥ द्युतिस्वाप्योः सम्प्रसारणम् ७।४।६७। द्युत ञिष्वप् एतयोः
इत्येतयोरभ्यासस्य सम्प्रसारणसंज्ञक आदेशः स्यात् द्युत दिद्युते व्यदिद्युतत् दिद्योतिष
ते विदिद्युतिषते स्वापेः सुषुप्यते सुष्वापयिषति स्वापेर्णिजन्तस्याभ्यासनिमित्तेन यस्य येनाऽनन्तर्ये

तिसम्प्रसारणमिष्यते । इति काशिका स्वापिग्रहणमण्यन्तार्थम् । सुष्वापयिषतीति स्वपेः
सन्नादिषु परेषु ण्यन्तात् विहितं सम्प्रसारणं णिचा व्यवधानेन प्राप्नोतीति स्वापेर्ण्यन्तस्याऽभ्यासस्य
सु.सि. सम्प्रसारणं विधीयते तत्र कृदन्तेऽतिप्रसङ्गः । २ इहापि प्राप्नोति स्वापयतेर्ण्वुल् स्वाप
कौ.३. कः स्वापकमिच्छति स्वापकीयति स्वापकीयतेः सन् सिष्वापकीयिषतीति ॥ सिद्धन्तु
५१ णिग्रहणात् । तस्मान्णिग्रहणात् कर्तव्यम् इति भाष्यम् स्वपेर्णाविति वक्तव्यम् तेन स्वपे
51 र्णौ णिचि विधीयते तदन्तस्य ग्रहणात् वृत्तौ स्वापिग्रहणाभावः इति कैयटः ॥ द्युद्भ्यो लुङि ।
१।३।९१। ते अनुदात्तेत्त्वान्नित्यमात्मनेपदे विकल्पः बहुवचनादाद्यर्थलाभः द्युतादिभ्योऽस्मा इत्यत्र
इ३ मन्तेभ्यो ऽयादिभ्यो लुङः परस्मैपदं वा स्यात् अद्युतत् अद्योतिष्ट अलुठत् अलोठि
ष्ट लुङीति किम् द्योतते ॥ मिदेर्गुणः ७।३।८२। त्रिमदा स्नेहने तस्मात् इकः शि ५१
ति प्रत्यये परे गुणः स्यात् मेद्यति मेद्यतः मेद्यन्ति शितीति किम् मिद्यते ॥ हृस्वः सं।

सनोः १।३।९२ वृतु वृधु शृधु स्यन्दू कृपू इत्येतेभ्यः सनोर्विषये परस्मैपदं वा स्यात्।
वृतु वर्त्स्यति अवर्त्स्यत् वर्तिष्यते अवर्तिष्यत विवृत्सति विवर्तिषते ॥ न वृद्भ्यश्चतुर्भ्यः
वृतु वृधु शृधु स्यन्दू इत्येतेभ्यः परस्य स इत्येतदादेरार्धधातुकस्य परस्मैपदेष्विट् इत्ये।
षआगमो न स्यात् वृतु वर्त्स्यति अशर्त्स्यत् शिशृत्सति स्यन्दू स्यन्त्स्यति अस्यन्त्स्यत् सि
स्यन्त्सति चतुर्ग्रहणमसार्थमेवकृपेरणात् परस्मैपदेषु किम् वर्तिष्यते वर्तिषीष्ट अव
र्तिष्यत विवर्तिषते अथात्मनेपदेन समानपदस्थेभ्यो वृत्तादिभ्य इडागम इष्यते अन्यत्र।
सर्वत्र प्रतिषेधः इति काशिका वृत्तादिप्रतिषेधे चकृपेरुपसंख्यानम् १ विवृत्सिता विव
र्त्सितुम् न कर्तव्यम् अविशेषेण वृत्तादिभ्य इट्प्रतिषेधे मुक्ता आत्मनेपदपरस्मैपदवतो
निवक्ष्यामीति भाष्यम् आत्मनेपदपरस्मैपदवचने न लस्य सीयडेकादेशेषु सिद्धं वचनम् २ न स्ये
विवर्तिषिष्यते सीयुटि वर्तिषीष्ट एकादेशे वर्तिष्येते सिद्धं तु वृत्तादीनामात्मनेपदेन।

४.ए
कौ.३.
५२
52

समानपदस्थस्येत्युक्तत्वनात् १ चतस्त्रासिद्धमिग्रहणाऽनर्थकञ्च ॥ अनुविपर्यभिनिभ्यः स्य
न्दतेरप्राणिषु ८।३।७२। अनु वि परि अभि नि इत्येतेभ्य उपसर्गेभ्यः परस्य स्यन्दू इत्येतस्य
धातोरवयवस्य सस् इत्येतस्य मूर्द्धन्य आदेशो वा स्यात् प्राणिवाचकादिकर्त्ता न भवति अनु अनुष्य
न्दते अनुस्यन्दते वा जलम् वि विष्यन्दते विस्यन्दते वा तैलम् परि परिष्यन्दते परिस्यन्दते
वा घृतम् अभि अभिष्यन्दते अभिस्यन्दते वा उदकम् नि निष्यन्दते निस्यन्दते वा मधु अप्रा
णिष्विति किम् अनुस्यन्दते मत्स्यः अप्राणिष्विति प्रसज्यप्रतिषेधः तेन मत्स्योदके ऽनुस्यन्देते
इत्यत्र प्राण्यप्राणिसमुदायेपि प्राण्यस्तीति षत्वप्रतिषेधो भवति इति काशिका अप्राणिषु
ति पर्युदासो न प्रसज्यप्रतिषेधः तेन मत्स्योदके ऽनुष्यन्देते इत्यत्रापि पदे षत्वम्भवत्येव प्रा
णिष्वेनस्युन्दोत्तु न स्यात् अथ यः प्राणी अप्राणी च कथन्तत्र भविष्यति तत्त्वम् अनुष्यन्देते म
त्स्योदके इति आहो स्विदनुस्यन्देते मत्स्योदके इति यदि तावत् प्राणीविधिनाश्रीयते अप्र

५२

प्राणीप्रतिषेधेनाश्रीयते किम्पुनरत्रार्थसतत्वम् देवाप्तञ्ज्ञलमर्हन्ति इति भाष्यकृतः पर्यु
नाः पर्युदासमाश्रयेत्त सम्भवत्येकवाक्ये वाक्यभेदाश्रयणस्याऽयुक्तत्वात् प्रसज्यप्रतिषेधे दिवा
क्यभेदोऽपर्यपमावी इति कैय्यटः ॥ कृपो रो लः ८।२।१८। कृप इत्येतस्य धातोः रेफस्य
र् इत्येतस्य ल् इत्ययमादेशः स्यात् रशब्देन केवलरेफस्य ऋकारावयवरेफस्य चेत्युभयोर्ग्र
हणम् लशब्देनापि केवललकारस्य लृकारावयवलकारस्य च ग्रहणम् तेन केवलरेफ
स्य स्थाने लकारादेशः ऋकारस्यैकदेशविकारद्वारेण लृकारस्यादेशः आन्तरतम्यात्
कल्पेत चक्लृपे क्लृप्तः क्लृप्तवान् कृपणादीनां प्रतिषेधः १ कृपणः कृपाणः कृपा कृ
पीटम् वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यते २ वालमूललघ्वलमङ्गुलीनां वा लो रमा
पद्यत इति वक्तव्यम् २ इति काशिका वाल अश्ववारः अश्ववालः मूल मूरदेवः
मूलदेवः लघु रघु स्यदः लघुस्यदः अलम् अरंभक्ताय अलंभक्ताय अंगुलि अंगुरिः

पू.लि.
को.३.
४३
43

स्वह्र.लि: सेताछन्देसार्वाकपिलकादीनाम् १ सेताछन्दसार्वाकपिलकादीनामितिवक्तव्यम् २
इतिकाशिका कपिलकाः कापिरकाः तिर्पिरिकम् तिल्पिलिकम् कर्म्मषम् कल्मषम् रोमा
णि लोमानि पांसुरम् पांसुलम् कर्म्म कल्म शुक्रः शुक्लः कपिलक तिर्विलीक लोमानि
पांसुल कल्म शुक्ल कपिलिका तर्पिलिका तर्पिलि आकृतिगणोयम् कपिलिकादिः ॥ ॥
लटिवक्लृपः १।३।९३। लुटिस्यसनोश्चविषयेक्लृपश्चस्यैतस्मात्परस्मैपदंवास्यात् कल्प्ता क
ल्प्तारौ कल्प्तारः कल्प्तासि कल्पितासे कल्प्स्यति कल्पिष्यते अकल्प्स्यत् अकल्पिष्यत चि
क्लृप्सति चिकल्पिषते इति ९२ सूत्राणिभाष्ये १।३।२। व्याख्यातानि इतिसूत्रपाठेप्रथमाध्या
यस्यतृतीयःपादः ॥ ॥ तासिचक्लृपः ७।२।६०॥ क्लृप इत्येतस्मात्परस्यतासि परस्यस्य
सादेरार्द्धधातुकस्यचपरस्मैपदेषुइट् इत्ययमागमोनस्यात् कल्प्तास्वः कल्प्तास्मः कल्प्स्यति
अकल्प्स्यत् चिक्लृप्सति परस्मैपदेष्वकिम् कल्पितासे कल्पिष्यते कल्पिषीष्ट अकल्पिष्यत

४३

वकारस्थिषते झोपरध्यात्मनेपदेन समानपदस्थस्य रुडागम इष्यते इति काशिका इत्यादिसूत्र
द्वयन्तु भाष्यकृतानव्याख्यातम् ॥ व्यथो लिटि ७।४।६८ व्यथ इत्येतस्य धातोरभ्यासस्य सम
म्प्रसारणं स्यात् लिटि परे व्यथ विव्यथे विव्यथाते विव्यथिरे लिटीति किम् वाव्यथ्यते हला
दिःशेषापवादोऽयम् वकारस्य तु न सम्प्रसारणं न सम्प्रसारणेति निषेधात् इत्यादि समस्त
सारणि भाष्यकृतानव्याख्यातानि ॥ फणां च सप्तानाम् ६।४।१२५ फण इत्येवमादीनां
सप्तानां धातूनामेत्वाभ्यासलोपौ भवतः किति लिटि सेटि थलि च परतः फण फेणतुः प
फणतुः फेणुः पफणुः फेणिथ टुभ्राजृ भे पफणिथ राज रेजतुः रराजतुः रेजुः ररा
जुः रेजिथ रराजिथ टुभ्राजृ भेजे बभ्राजे भेजाते बभ्राजाते भेजिरे बभ्राजिरे टुभ्राशृ
भेशे बभ्राशे भेशाते बभ्राशाते भेशिरे बभ्राशिरे टुभ्लाशृ भ्लेशे बभ्लाशे भ्लेशाते बभ्ला
शाते भ्लेशिरे बभ्लाशिरे स्यमु स्येमतुः सस्यमतुः स्येमुः सस्यमुः स्येमिथ सस्यमिथ ।

सि.की.
कौ. ३.
५५

स्खन स्खेनतुः सस्खनतुः स्खेनुः सस्खनुः स्खेनिथ सस्खनिथ समानेति किम् क्षन दक्षनतुः द
क्षनः दक्षनिथ ॥ वा जॄभ्रमुत्रसाम् ६।४।१२४ । जॄष् भ्रमु त्रसी इत्येतेषां धातूनाम् एत्व
न स्यस्थाने एत्वमभ्यादेशो वा स्यात् अभ्यासलोपश्च किति लिटि सेटि थलि च परे जॄष् जेर
तुः जजरतुः जेरुः जजरुः जेरिथ जजरिथ भ्रमु भ्रेमतुः बभ्रमतुः भ्रेमुः बभ्रमुः भ्रेमि
थ बभ्रमिथ त्रसी त्रेसतुः तत्रसतुः त्रेसुः तत्रसुः त्रेसिथ तत्रसिथ इत्यादिरूपत्रयमनुभा
ष्य कृतानव्याख्यातम् ॥ ॥ सहिवहोरोदवर्णस्य ६।३।११२ । षह वह इत्येतयोरवर्णस्य
स्य ओकारादेशः स्यात् ढलोपनिमित्तयोर्ढयोः परतः सोढा सोढुम् सोढव्यम् वो
ढा वोढुम् वोढव्यम् अवर्णस्य किम् ऊढः वर्णग्रहणं किम् कृतायामपि वृद्धौ यथा स्या
त् उदवोढाम् ॥ सोढः ८।३।११५ वद इत्येतस्य सहधातोः सोढ्रूपस्यावयवस्य सस्य इत्येतस्य मू
र्धन्यादेशो न स्यात् परिसोढा परिसोढुम् परिसोढव्यम् परिनिविभ्यः इति षत्वप्राप्तिः

ष्यते सोढः किम् परिषहते किमर्थं सहिः सोढ्रूपस्तोपलक्ष्यते यत्रास्येतद्रूपं तत्रयथास्यात् इह्
माभूत् परिषहतइति इतिभाष्यम् ॥ सिवादीनांवाड्व्यवायेपि ८।३।७०। षिवु षह सुट्
ष्टुञ् ष्वञ्ज इत्येतेषांशब्दस्त्वंपातानामन्यत्त्वनामः वयवस्यम् इत्येतस्याः देशस्य परि नि वि
इत्येतेभ्यउपसर्गेभ्यःस्थितकेभ्यःपरस्याः अगमेनव्यवधानेपिवामूर्द्धन्यआदेशःस्यात षिवु पर्य्य
षीव्यत् न्यषीव्यत् व्यषीव्यत् पर्य्यसीव्यत् न्यसीव्यत् व्यसीव्यत् षह पर्य्यषहत न्यषहत व्य
षहत पर्य्यसहत न्यसहत व्यसहत सुट् पर्य्यष्करोत् पर्य्यस्करोत् ष्टुञ् पर्य्यष्टौत् न्यष्टौ
त व्यष्टौत व्यष्टौत् पर्य्यस्तौत न्यस्तौत् व्यस्तौत् ष्वञ्ज पर्य्यष्वजत न्यष्वजत व्यष्वजत पर्य्यस्व
जत न्यस्वजत व्यस्वजत स्तुस्वञ्ज्योः प्राक्सितादित्यस्य इतोऽषाम्न्याम उभयत्र विभाषेयम् ॥
पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदांपिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।
७८॥ पा घ्रा ध्मा ष्ठा म्ना दाण् दृशिर् ऋ सृ शद्लृ षद्लृ इत्येतेषांधातूनांक्रमात्पिब जिघ्र।

पिब जिघ्र धम यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशा भवन्ति शिति प्रत्यये परे पा पिबति।
घ्रा जिघ्रति ध्मा धमति स्था तिष्ठति म्ना मनति दाण् यच्छति दृशिर् पश्यति ऋ ऋच्छति सृ
धावति शद्लृ शीयते षद्लृ सीदति पिबेर्गुणाप्रतिषेधः १ पिबति लघूपधगुणः प्राप्नोति सतर्हि
प्रतिषेधो वक्तव्यः न वक्तव्यः पिबतिरदन्तः अथवा ऽहृ. हेतपुनर्हेतावविधिनिष्ठितसंस्मेवत्रभविष्य
ति इति भाष्यम् ॥ सदेः परस्य लिटि ८।३।११८। षद्लृ इत्येतस्य धातोरवयवस्य परस्मेत सस्य इ
त्येतस्य लिटि परतो मूर्द्धन्यआदेशो न स्यात् अभिषसाद निषसाद विषसाद सदो लिटि प्रतिषेधे
स्वञ्जेरुपसङ्ख्यानम् १ अभिषस्वजे परिषस्वजे स्वञ्जेः संयोगान्तादपि परस्य लिटो विभाषा
कित्वमिच्छन्ति तेन पक्षे परिषस्वञ्जे अभिषस्वञ्ज इत्यपि भवति इति काशिका सदिस्वञ्जो
ः परस्य लिटि इति सूत्रपाठः कौमुद्याम् ॥ शदेः शितः १।३।६० शद्लृ इत्येतस्मात् शितो विक
आत्मनेपदं स्यात् शीयते शीयेते शीयन्ते शितः किम् अशात्स्यत् शदेर्लुङादीनामात्मनेपदं भव

मू॰टी॰
कौ॰३॰
५५
55

५५

तीतिवक्तव्यम् १ उपसर्गात्पूर्वंनियमेः इत्यत्राप्युपसंख्यानम् २ कृताऽकृतप्रसङ्गि नित्यंतद्वि-
परीतमनित्यम् १ शब्दान्तरस्यचप्राप्नुवन्विधिरनित्यः २ शब्दान्तरप्राप्त्याभुवतः शब्दान्तरेप्राप्नुव
न्नप्यनित्यम् ३ लक्षणान्तरेणप्राप्नुवन्विधिरनित्य ४ क्वचित्कृताऽकृतप्रसङ्गि लक्षणभेदेन
प्यनित्यता ५ यस्यचलक्षणान्तरेणनिमित्तंविहन्यतेनतदनित्यम् ६ यस्यचलक्षणान्तरेण
निमित्तंविहन्यतेनतदप्यनित्यम् ७ स्वरभिन्नस्यचप्राप्नुवन्विधिरनित्यः ८ परिभाषाः समाः ॥
गमहनजनखनघसांलोपः क्ङित्यनङि ६।४।९८ गम्लृ हन जन खनु घस्लृ एषां
पूर्वोक्तानामङ् भिन्नेऽजादौ क्ङिति तिङि तिचप्रत्यये परे उपधाया लोपः स्यात् गम्लृ जग्मतुः जग्मुः
हन जघ्नतुः जघ्नुः जन जज्ञतुः जज्ञुः जज्ञे जज्ञाते जज्ञिरे खनु चख्नतुः चख्नुः घस् ज
क्षतुः जक्षुः क्ङिति किम् गमनम् अनङि किम् अगमत् अजादौ किम् गम्यते ॥ ये विभा
षा ६।४।४३। ए एषां तदादिके क्ङिति तिङि तिचप्रत्यये परे जनसनखनामात्वं वा स्यात् जायते जन्यते

सू. सि
कौ. ३.
५९
४०

स्नापयते मज्ञमते नेनेः शपनित्रत्तनोर्जेतिनित्यं जादेशः स्नापयते सम्पते स्नास्नापयते संसम्यते खा
पते खम्यते शाखापयते चंखम्यते इत्यादिरूपद्वयं भाष्येऽनव्याख्यातम् ॥ ऊदुपधाया गोहः ६।४।
८९ । गोहू इत्येतस्याः ऊ स्यात् यथा याः अजादौ प्रत्यये परे ऊ इत्येवं आदेशः स्यात् गुहू निगूहय
ति निगूहकः उपधायाः किम् अन्त्यस्य मा भूत् गोह इति विकृतनिर्देशादिह न भवति निजुगु
हतुः निजुगुहुः अचि किम् निगोढा गोहिग्रहणं विषयार्थम् १ अयादेशप्रतिषेधार्थं च
विकृतग्रहणम् १ ऊत्वादेशे यवादेशप्रसङ्गः कृतत्वात् सिद्धत्वात् २ ॥ लुग्वा दुहदिहलिह
गुहामात्मनेपदे दन्त्ये ७।३।७३ । दुह दिह लिह गुहू इत्येतेभ्यो धातुभ्यो विहितस्य क्स इत्ये
तस्य दन्त्यवर्णादावात्मनेपदे परे वा लुक् स्यात् दुह अदुग्ध अधुक्षत अधुक्षथाः अदुग्धथाः अ
धुक्षमहि अदुग्ध्वम् अदुह्वहि अधुक्षावहि दिह अदिग्ध अधिक्षत लिह अलीढ अलि
क्षत गुहू अगूढ अघुक्षत दन्त्ये इत्यादि किम् गुहू अघुक्षत ऊदित्वादिड्भावपक्षे क्सः स्या

५९

त्मनेपदे किम् अधुक्षत् दन्त्ये किम् अधुक्षामहि लुग्ग्रहणमनन्तमण्डूकप्लुतिवचनेसर्वलो।
पार्थम् अयनाः स्मलोपकृते फलोकलीगितिलोपेर्नापि सिध्यति दंतोष्ठोपि वकारो दन्त्यग्र
हणेन गृह्यते ॥ स्यद्रकोऽसे ७।२।७०। ऋ इत्येतदन्त्येभ्यो धातुभ्यः हन इत्येतस्माच्च परस्य स्य।
प्रत्ययस्य इट् इत्ययमागमः स्यात् करिष्यति हरिष्यति हनिष्यति नपरत्वे विस्पष्टार्थम् स्व
रतेर्वैकल्पत्वात् इतः स्यविप्रतिषेधेन १ स्वरतेर्वैकल्पत्वात् इतः स्यस्मेन इडवति विप्रतिषेधेन १ इतिका
का स्वरिष्यति ॥ रिङ् शयग्लिङ्क्षु ७।४।२८। ऋ इत्येतदन्तस्याङ्गस्य रिङ् इत्ययमा।
देशः स्यात् श यक् इत्येतयोः परयोर्लिङि च यकारादौ असार्वधातुके परे श आद्रियते
आध्रियते यक् क्रियते ह्रियते लिङ् क्रियात् ह्रियात् असार्वधातुके किम् बिभृयात्।
यकारादौ किम् कृषीष्ट इत्यादिस्स्वरूपमभाष्येतन्नव्याख्यातम् ॥ उश्च १।२।१२ ऋवर्णान्ता
त्परौ झलादी लिङ्सिचौ कितौ स्तः आत्मनेपदेषु परेषु कृषीष्ट हृषीष्ट अकृत अहृत वरीषी

ष्ट आत्मनेपदेष्वकिम् अकाषीत् ॥ ह्रस्वादङ्गात् ८।२।२७ ह्रस्वान्तादङ्गात्परस्य सस्य इत्येतस्य
झलि परे लोपः स्यात् डुकृञ् अकृत अकृथाः हृञ् अहृत अहृथाः ह्रस्वात्किम् अच्यो
ष्ट अस्तोष्ट अङ्गात्किम् अलाविष्ट अलाविष्टाः झलि किम् अकृषाताम् अकृषत अत्रापि
सिच एव लोपस्तेनेह न दिद्वगाम् दिद्वमामित्यत्र न भवति दिशाद्यन्त्यन्तात्तरसमयो तनोऽङ्ग
व्यवकर्षे आम्प्रत्ययः ॥ आदेच उपदेशेऽशिति ६।१।४५ उपदेशे एजन्तस्य धातोराकारा
देशः स्यात् न तु शिति प्रत्यये दे. दाता दातुम् ग्लै ग्लाता ग्लातुम् शो शाता शातुम् उ
पः किम् कर्ता उपदेशे किम् चिञ् चेता अशिति किम् ग्लायति इत्यसिद्धकृताकारादेशो निषे
धः एशि भवत्येव नेष्ट मम्ले आत्वापवादस्योपसंख्यानम् १ अशित्येकादेशप्रतिषेधश्चादिवा
त्वात् २ अयवायावां प्रतिषेधश्च ३ शितिप्रतिषेधे मलकोरुपसंख्यानम् ४ प्रातिपदिक
प्रतिषेधः ५ ॥ आतऔणलः ७।१।३४ आ इत्येतदन्तादङ्गात्परस्य णल इत्येतस्य औ।

सू.सि
कौ.उ.
४७
47

४७

इत्येषऽआदेशः स्यात् या पायो द्दा तस्यै अवर्णान्तकार्यान्तरिग्रणपत्यास्थवन्ति दिवमेका
देशडीवमिति अतवकाशमीत्वमेकादेशम्बाधिष्यते डौतेवकृतेयद्यपिपरत्वाद्देकादेशः स्या
त्तिवङ्गावादिर्वचनम्भविष्यति इतिभाष्यम् ॥ आतोलोपइटिच ८।४। ८४। आ इत्येतदन्तस्या
ङ्गस्याऽजाद्योरार्धधातुकयोरिट् क्ङितोः परयोर्लोपः स्यात् इटि पा पपिथ किति पपतु।
पपुः टिति यदा यथा आर्धधातुकेकिम् वर्षे गतेलिङि इत्यादिरूपम् यन्ति अचीत्येव ग्ला
यते दीक्षीय इज्ग्रहणमः क्ङिदर्थम् १ सार्वधातुकेचाऽदीत्याःऽर्धधातुकाधिकारादुपसं
ख्यानम् २ इषमर्जमहमितआदीति आङ्. पूर्वाद्दाजोलङि मन्त्रेषमेतिनिल्लकादिरूपमे
तत् तद्विपसंख्यानंकर्तव्यम् नकर्तव्यम् आर्धधातुकत्वात्सिद्धमितिभाष्यम् ॥ दाधाघ
दाप् १।१।२० संतापदेशः ८४ ।११९ १ ४ ५९ ॥ दारूपाधारूपाश्चधातवोघुसंज्ञाःस्युर्दा
पूदैपौविना डुदाञ् दाणदोदेङ् डुधाञ् धेट् इत्येतेषट्धातवः तन्तुदाप् दैप् नवदीङ् प्रणिद

दाति प्रणिदाता प्रणिगायति प्रणिदयते प्रणिदृध्याति प्रणियपति अदाविति किं दांतबर्हिः
अवदातंम्नवम् घुसंज्ञायांप्रकृतिग्रहणंशिदर्थम् १ घुसंज्ञायांप्रकृतिग्रहणंशिद्विकृतार्थ
म् २ समानशब्दप्रतिषेधः ३ दीङः प्रतिषेधः स्थाघ्वोरित्वे ४ सर्वेसर्वपदादेशादाक्षीपुत्र
स्यपाणिनेः एकदेशविकारेऽहिनित्यत्वंनोपपद्यते १ कार्तिकेयम् गामादाग्रहणेष्वविशे
षः १ पदागमास्त्वनुगामित्तास्तद्ग्रहणेनगृह्यन्ते २ नानुबन्धकृतमनेकाल्त्वम् ३ पा
रिभाषाइमाः ॥ एर्लिङि ६।४।६७। घु मा स्था गा पा ओहाक् षो इत्येतेषां क्ङिति
लिङ्प्रत्ययेपरेए इत्ययमादेशः स्यात् देयात् धेयात् मेयात् स्थेयात् गेयात् पेयात्
हेयात् अवसेयात् क्ङितीति किम् दासीष्ट इत्यादिसर्वमनुभाष्येणव्याख्यातम् ॥ ॥
विभाषाधेट्श्व्योः ३।१।४९। धेट् ट्श्वि इत्येताभ्यां परस्य च्लेश्चङादेशोवास्यात् अदध
त् चङः भावेविभाषाघ्राधेट्इतिवासिचोलुक् अधात् अधासीत् अशिश्वियत् चङः भा

सि.कौ.
को.३.
५८
48

५८

वेञ्रउ-विकल्पः अग्रात अग्लयीत कनेरीत्येव अधिप्रानांगणवोवक्तेन इत्यादिस्त्वत्रयेभाष्ये त्वनव्याख्यातम् ॥ विभाषाघ्राधेट्शाछासः २।४।७८। आ धेट् शा छा सा इत्येतेभ्यः परस्यसिचोलुग्वास्यात्परस्मैपदेषु अघ्रासीत् अघ्रात् अधासीत् अधात् शो अशासीत् अशात् छो अच्छासीत् अच्छात् षो असासीत् परस्मैपदेष्वित्येव अघ्रासातांस्नमनसौदे वटेतेन भाष्येतनेदंव्याख्यातम् ॥ यमरमनमाऽऽतांसक् ७।२।७३। यम रम णम इत्येतेषांमाकारान्तानान्त्वथात्तनांसक् इत्येषआगमःस्यात् परस्मैपदेषु यमः सिवर ट इत्येषआगमस्स्यात् यम अयंसीत् अयंसिष्टाम् रम अरंसीत् अरंसिष्टाम् णम अनंसीत् अनंसिष्टाम् आदन्तानाम् या अयासीत् अयासिष्टामं‍वा अवासीत् अवासिष्टा म् परस्मैपदेष्वकिम् अयंस्त अरंस्त अनंस्त ॥ वाऽन्यस्यसंयोगादेः ६।४।६८॥ घुमास्था देवन्यस्यसंयोगादेराऽऽकारान्तस्याः कृ. स्याः ईथानकेकितिलिङि. पर प इत्येष आदेशो।(

वास्यात् ध्येयात् ग्लायात् अस्मरणकिम् स्नियात् संयोगादेः किम् पायात् कितिकिम् ग्लासी
ष्ट ॥ ऋतश्चसंयोगादेर्गुणः ७।४।१०। ऋ इत्येतदन्तस्य संयोगादेरङ्गस्य लिटि परे गुणः स्या
त् स्व सस्वरतुः सस्वरुः ध्व दध्वरतुः दध्वरुः स्मृ सस्मरतुः सस्मरुः ऋतः किम् क्षि चि
क्षियतुः संयोगादेः किम् कृ चक्रतुः लिटि किम् स्मृतः क्ङितिगुणनिषेधे प्राप्ते विधिरयं
म ह्रस्वविषये तद् एवं विप्रतिषेधेन वृद्धिर्बाध्यते १ इति काशिका सस्वार सस्मार संयोगादे
र्गुणविधाने संयोगोपधग्रहणं कृञर्थम् । संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं
कृतं तत्रम् । इति काशिका संचस्करतुः संचस्करुः एवं न्यायेन तु सुट् तत्पश्चादुपसर्गा
गात् इति पदे लोपन्तत् ॥ ऋतो लिटि गुणात् तन्मात् निह वृद्धिः एवं विप्रतिषेधेन २ पुनः प्रसंगवि
ज्ञानान्नास्तिदम् ॥ गुणोर्त्तिसंयोगाद्योः ७।४।२९। ऋ इत्येतस्य धातोः ऋ इत्येतदन्तस्य च सं
योगादेरङ्गस्य यकि परे यकि च परे लिङि च परे गुणः स्यात् यकि ऋ अर्य्य

मू·गि·
को·३·
५९
५१

५८

ते संयोगादि स्मृ स्मर्य्यते लिङि अर्य्यात् स्मर्य्यात् संस्वरिषीष्ट तेनासिकं दृष्टात्संयोगा।
दित्वाभावादिड्‌न भवति संस्क्रियात् यकारादौ किम् ध्वृ ध्वर्षीष्ट असम्बन्धे यात् के किम् इष्यात् ॥
श्र्युकः किति ७।२।११। श्रिञ् इत्येतस्मादुपदेशे ऊकःपसा द्धारान्तादेकाचश्चाङ्गात्परस्य कितःप्रत्य
यस्य इट् इत्येष आगमो न स्यात् श्रिञ् श्रितः श्रितवान् श्रित्वा उक यु युतः युतवान् युत्वा लूञ्
लूनः लूनवान् लूत्वा वृङ् वृञ् वृतः वृतवान् वृत्वा तॄ तीर्णः तीर्णवान् तीर्त्वा श्र्युकः किम् ।
विदितः विदितवान् कृत्वा क्त्वा किति किम् श्रयिता एकाचः किम् जागरितः जागरितवान् उप
देशे किम् तीर्णाद्यस्य अन्ययास्यात् इत्येषप्रत्ये च वृत्ते न स्यात् ॥ क्ङिति निर्दिष्टकारानिर्देशे न गित्तोः
पि इडेतन्निषेधः भस्मः वा अर्शोऽसि वृद्धावस्मुक्तेपुरस्तात् प्रोर्णुतः प्रोर्णुतवान् इत्यादि सत्व
इयमभ्यस्थलकङ्डिर्न व्याख्यातम् ॥ सनिशासाम्मनिभसश्च ३।२।५८॥ स्व शास मर इत्येतेभ्यः पर
स्येड्डादेशः स्यात् असमरत् अशिषत् अभत् योगविभागस्यात्मनेपदार्थः समारत् वकारः प

सू॰ सी॰
कौ॰ शी॰
५०
50

इत्येषपदोऽनुकर्षणार्थः नचैतत्तात्रपयोसते ॥ ऋच्छत्यृताम् ७।४।११। ऋच्छ ऋ इत्येतयोः ऋ इत्ये
दन्तानां चाङ्गानां लिटि परे गुणः स्यात् ऋच्छ आनर्च्छ आनर्च्छतुः आनर्च्छुः ऋ आरतुः आरुः ऋ
ताम् कॄ चकरतुः चकरुः गॄ जगरतुः जगरुः लघूपधत्वाभावाद्वृद्धेरप्राप्तो गुणो विधीयते ऋ
तोऽकिति गुणनिषेधे प्राप्ते विधिः वृद्धिविषये तु वृद्धेर्विप्रतिषेधेन वृद्धिरेवेष्यते १ इति काशिका
चकार जगार इत्यस्य भाष्यकृता नानुव्याख्यातम् ॥ इडत्यर्तिव्ययतीनाम् ७।२।६६। अद् ऋ
व्येञ् इत्येतेभ्यस्थलो नित्यमिट् इत्येव आगमः स्यात् आदिथ आरिथ विव्ययिथ इड्ग्रहणं।
विस्पष्टार्थम् विकल्पविधानेऽत्तिव्ययतिग्रहणमनर्थकं स्यान्निषेधाने चात्तिग्रहणमिति।
इड्ग्रहणं विनापि नित्यत्वसिद्धेः ॥

श्रुवः शृ च ३।१।७४ । श्रु इत्येतस्माद्धातोः श्नुप्रत्ययो भवति तत्सन्नियोगेन श्रु इत्येतस्य शृ इत्या
देशश्च भवति शृणोति शृणुतः शृण्वन्ति ॥ हुश्नुवोः सार्वधातुके ६।४।८७। हु इत्येत
स्य श्नुप्रत्ययान्तस्य चाङ्गस्यानेकाचोऽसंयोगपूर्वस्योवर्णान्तस्य सार्वधातुके परे यण् स्यात् जुह्वति
जुह्वतु सुन्वन्ति हुश्नुवोः किम् योयुवति सार्वधातुके किम् जुहुवतुः असंयोगपूर्वस्य
किम् आप्नुवन्ति हुश्नुग्रहणमनर्थकमन्यस्याऽभावात् । यङ्लुगर्थं तर्हि हुश्नुग्रहणं क
र्तव्यम् । यङ्लुगर्थमिति चेदाऽऽर्धधातुकत्वात्सिद्धम् । छन्दस्युभयथेत्यनेनेति भावः एव
न्तर्हि सिद्धे सति यत् हुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यः भाषायामपि यङ्लुग्भवती
ति इति भाष्यम् ॥ दयतेर्दिगि लिटि ७।४।९ । देङ् इत्येतस्य धातोर्लिटि परे दिगि इत्ययमादे
शः स्यात् दिग्ये दिग्याते दिग्यिरे दयङ् इत्येतस्य तु न ग्रहणं तस्य लिटाम्विधानात् दिग्यादेशे
न द्विर्वचनस्य बाधनमिष्यते । इति काशिका साभ्यासस्येति वक्तव्यम् । पुनः प्रसङ्गविज्ञानाद्

सू.टी
को.३.
५१
51

तिविदमाविभिक्तसम् २१। । स्थाघ्वोरिच्च १।२।१७। अनयोरिदादेशः स्यात्सिच्च किन्स्यादात्म
नेपदेषु परेषु उपायत कम्पाम् उपायेस्त ॥ ऋतइद्धातोः ७।१।१०० ॠ इत्येतदन्तस्य धातोरङ्गस्य इ
इत्येष आदेशः स्यात् कॄ किरति गॄ गिरति स्तॄञ् स्तीर्णम् विस्तीर्णम् लाक्षणिकस्याप्यऽत्र
ग्रहणम् कॄ चिकीर्षति धातोः किम् पितॄणाम् ॥ वृतो वा ७।२।३८। वृङ् वृञ् इत्येता
भ्यां ॠ इत्येतदन्ताच्च परस्येटोऽलिटि दीर्घो वा स्यात् वरीता वरिता ॠदन्तात् तरीता तरिता
स्तॄञ् स्तरीता स्तरिता वृतः किम् करिष्यति अलिटि किम् ववरिथ तेरिथ इमादिषट्।
सूत्राणि भाष्यकृद्भिर्नव्याख्यातानि ॥ सिचि च परस्मैपदेषु ७।२।४०। वृङ् वृञ् इत्येताभ्यां
ॠ इत्येतदन्ताच्च परस्येटः परस्मैपदे सिचि दीर्घो न स्यात् अवारिष्टाम् अवारिषुः अस्तारि
ष्टाम् अस्तारिषुः परस्मैपदेषु किम् अवरिष्ट वरीष्ट ॥ गुप्तिज्किद्भ्यः सन् ३।१।५। गुप

५१

तिज् कित् इत्येतेभ्यो धातुभ्यः सन्प्रत्ययः स्यात् जुगुप्सते चिकित्सति चिकित्सते गुपादि

षनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदम् ॥ मान्बधदान्शान्भ्योदीर्घश्चाभ्यासस्य ३।१
।६। मान बध दान शान इत्येतेभ्यो धातुभ्यः सन् स्यात् अभ्यासस्य दीर्घश्च भवति मीमां
सते बीभत्सते दीदांसते शीशांसते उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते तेन क्वचि
न्न भवति अभिमानयति ॥ सन्यङोः ६।१।९। सन् यङ् इत्येतदन्तस्य धातोरनभ्यासस्य
प्रथमस्यैकाचो द्वे भवतः अजादेर्द्वितीयस्यैकाचः सन् पिपक्षति पिपठिषति यङ् पा
पच्यते पापठ्यते अजादेः ऊर्णुनविषति ऊर्णोनूयते अनभ्यासस्येत्येव जुगुप्सिषते लोलू
यिषते सन्यङोः परत इति चेदिटो द्विर्वचनं पराश्रितत्वात् । दन्त्ये स्थेटो द्विर्वचनं कर्तव्यम् २ प
लक्ष्येऽपि पकारस्य उपदेशोऽनुदात्तादित्वोपदेशवचनमनुदात्तविशेषणं चेत्तन्न इह प्रतिषेधो व
क्तव्यः ३ सन्यङन्तस्य चेदशः सन्यनिटः ४ द्विर्वचनमित्येव दीर्घत्वं संप्रसारणविषयत्वमधिक
स्य द्विर्वचनात् ५ आह्वयोश्चाभ्यस्तविधिप्रतिषेधः ६ पूर्वत्रासिद्धीयमद्विर्वचने इति वक्तव्य

मृ० सी०
को० ३.
५२
52

म्२ नत्रसमप्रसारणस्य दीर्घवचनेऽपि प्रयोगस्येष्टत्वेष पदोषो निर्दोषः इति भाष्यम् ॥ दंशसञ्जस्व
ञ्जांशपि ६।४।२५ दंश षञ्ज स्वञ्ज इत्येतेषामुपधासंज्ञकस्य नस्य लोपः स्यात् शा
पि शपि परे दशति सजति परिष्वजते इत्यादि सूत्रं न वक्तं भाष्ये तु न व्याख्यानम् ॥ रञ्जेश्च ।
६।४।२६। रञ्ज इत्येतस्योपधासंज्ञकस्य नस्य शपि परे लोपः स्यात् रजति रजतः रज
न्ति योगविभाग उत्तरार्थः ॥ वेः स्कन्देरनिष्ठायाम् ८।३।७३। वि इत्येतस्मादुपसर्गादुत्तरस्य
स्कन्दिर् इत्येतस्य धातोरवयवस्य सस्य इत्येतस्य मूर्धन्य आदेशो वा स्यात् निष्ठासंज्ञकाद्भिन्ने प्रत्य
ये स्कन्दिर् विष्कन्ता विष्कन्तुम् विस्कन्ता विस्कन्तुम् अनिष्ठायां किम् विस्कन्नः स्क
न्नप्रत्ययेष्वेवेदम्प्रवर्तते अनिष्ठायामिति पर्युदासात् इदं सूत्रं भाष्यकृता न व्याख्यातम् ।
॥ परेश्च ८।३।७४। परि इत्येतस्मादुपसर्गादुत्तरस्य स्कन्दिर् इत्येतस्य धातोरवयवस्य सस्य
इत्येतस्य मूर्धन्य आदेशो वा स्यात् परिष्कन्दति परिस्कन्दति परिष्कन्ता परिस्कन्ता परिष्कन्त

५२

म् परिष्कन्नः परिस्कन्नः परिष्कन्नव्यम् परिस्कन्नव्यम् अनिष्ट्यामितीहानसंबध्यते योगवि-
भागसामर्थ्यात् इति काशिका अनिष्ठायामिति वर्तते उक्तादेव निष्ठान्तम् निष्ठान्तमित्याह कथं
ज्ञायते योगविभागकरणसामर्थ्यात् इतरथा हि विपरिभ्यां स्कन्देरनिष्ठायामित्येव ब्रू-
यात् इति भाष्यम् ॥ इषुगमियमां छः ७।३।७७। इषु गम्लृ यम इत्येतेषां धातूनां शिति
प्रत्यये परे छ इत्ययमादेशः स्यात् इषु इच्छति इच्छतः गम्लृ गच्छति इस्याति केचिद-
त्र उकारेण न पठन्ति तैः चात्र उवर्णशितीत्यनेन न विशेषयन्ति इषेश्छत्वमदृहि । इषमाभ्यत्-
इष्यति इस्याति तत्र द्विवक्तव्यम् न वक्तव्यम् अचीति वर्तते इति भाष्यम् ॥ गमेरिट् पर-
स्मैपदेषु ७।२।५८ गम्लृ इत्येतस्मात् धातोः परस्य इत्ययं तदादेरार्धधातुकस्य परस्मैपदे-
षु इट् इत्ययमागमः स्यात् गम्लृ गमिष्यति अगमिष्यत् जिगमिषति इणिकादेशो ऽ-
पि गृह्यते गमिः जिगमिषति अधिजिगमिषति इडादेशस्य तु न ग्रहणमात्मनेपदित्वा

व गमेः किम् चेष्यति इग्ग्रहणाद्विकल्पार्थम् परस्मैपदेषु किम् संगंस्यते अधिजिगांसते
सूत्रमित्यत्र गन्तास्मि आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते १ इति काशि
गमेरिट् परस्मैपदेषु चेत् तत्र तनुपसंख्यानम् १ जिगमिषिता जिगमिषितुम् जिगमिषि
तव्यम् ततश्चोपसंख्यानं कर्तव्यम् न कर्तव्यम् अविशेषेणागमेरिडागमस्तु क्त्वात्मने
पदपरेणेति वक्ष्यामीति भाष्यम् आत्मनेपदपरप्रतिषेधे तस्य सीयुडेकादेशे प्रतिषेधो
वक्तव्यः २ तत्र संजिगंसिष्यते सीयुटि संगंसीष्ट एकादेशे संगंस्यते सिद्धं तु गमेरा
त्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ३ ॥ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६।१।
५९ ॥ उपदेशेऽनुदात्तस्य ऋकारोपधस्य धातोर्झलादावकिति प्रत्यये अमागमो वा स्या
त् तृप् त्रप्ता तर्प्ता दृप् द्रप्ता दर्प्ता अजुपधस्य किम् भेत्ता कल्कितेत्यनुदात्तस्य आ
किति किम् तृप्तः भाष्ये तु नेदं व्याख्यातम् ॥ निसस्तपतावनासेवने ८।३।१०२ नि

का.शि. को.३. ५३ 53

स्य इत्येतस्मात् वयवस्य इत्येतस्य इणः परस्य सकारस्य मूर्धन्य आदेशः स्यात् इत्येवमादौ तप इत्ये
तस्मिन् प्रत्यये परे आसेवने भिन्नेऽर्थे गम्यमाने निष्टपति सुवर्णम् सकृदग्निं स्पर्शयतीत्यर्थः
अनासेवने किम् निस्तपति सुवर्णं सुवर्णकारः पुनः पुनरग्निं स्पर्शयतीत्यर्थः अनासेव
ने किम् निस्तपति सुवर्णं सुवर्णकारः नादौ किम् निरतपत् आसेवने पौनःपुन्यम् निष्टप्तं
रक्षः निष्टप्ता अरातय इत्यत्र समयासेवने छान्दसत्वात् षत्वमिति काशिका इत्यादि सृज्यत
प्रभाष्यकृतानव्याख्यातम् ॥ विभाषा सृजि दृशोः ७।२।६५ सृज दृशिर् इत्येताभ्यां परस्
स्य थलो वा इट् इत्येष आगमो न स्यात् सृज ससृष्ठ ससर्जिथ दृशिर् ददृष्ठ ददर्शिथ इत्या
दि सृज्यादय भाष्यकृतानव्याख्यातम् ॥ सृजि दृशोर्झल्यमकिति ६।१।५८ सृज दृशिर्
इत्येतयोर्धात्वोर्झलादावकिति प्रत्यये परे अम् इत्येष आगमः स्यात् स्रष्टा स्रष्टव्यम् असाक्षी
त् द्रष्टा द्रष्टव्यम् अद्राक्षीत् झलि किम् सर्जनम् अकिति किम् सृष्टः अमिसह. ग्रहणम्

१ सङ्प्रसादाद्दारः स नः सशाह्वायमहिक्रोऽरुकामात् नेन किंचिन्न भवति ॥ अरुशोः ङि गुणः
७।४।२९। अरु इत्येतदन्तानामङ्गानाम् हूशिर इत्येतस्य च अङ्गप्रत्यये परे गुणः स्यात् अरदत
स्त असरन्त अर आरत जप जरा हूशिर अदर्शीत् अदर्शीताम् अदर्शीन् ॥ नहृशः ३।१।
५७। हूशिर इत्येतस्माद्धातोः परस्मैपदे ङः चस्मादेशो न स्यात् अदर्शीत् अद्राक्षीत् इति वैकल्प
विकल्पः ॥ लिट्यभ्यासस्योभयेषाम् ६।१।१७। वच्यादीनां ग्रहादीनां चाभ्यासस्य लिटि
परे संप्रसारणं स्यात् वच् उवाच उवचिथ जिषप् सुष्वाप सुष्वपिथ यज इयाज इय
जिथ ड्डुवप् उवाप उवपिथ ग्रहेर्विशेषः जग्राह जग्रहिथ ज्या जिज्यौ जिज्यिथ ओव्रश्चू
वव्रश्च वव्रश्चिथ प्रच्छिभ्रस्जयोरविशेषः पप्रच्छ बभ्रज्ज किति लिटि तु द्वित्वात्
एतेषां धातोः संप्रसारणं पुनः प्रसङ्गविज्ञानाद्वितम् ऊचतुः ऊषुरित्यादि वच्यादीनां ग्रहा
दीनां चानुवृत्तस्यैव सिद्धे उभयेषां ग्रहणामस्यार्थो हलादिःशेषं बाधित्वा संप्रसारणं विधाय।

विव्याच अभ्यासस्य सम्प्रसारणं हलादिःशेषं बाधित्वेति प्रतिषेधेन १ नवा संप्रसारणमयवलीय

स्यादस्यत्रापि २ प्रयोजनं रत्माल्लोपयज्ञाः ३ संप्रसारणं वलीयो भवतीति वक्तव्यम् ४ सं

प्रसारणमयं च बलीयो भवतीति वक्तव्यम् अधेः कृदादित्वमनस्या जिनातिसंप्रसारणार्थम्

६ ॥ वचिस्वपियजादीनां किति ६।१।१५। वच ञिष्वप् इत्येतयोर्यजादीनां च किति प्रत्यये परे

सम्प्रसारणं स्यात् वच उक्तः उक्तवान् ब्रुवो वचिरपि गृह्यते स्वपि सुप्तः सुप्तवान् यजा(

दिगणगणान्तात् यज इष्टः इष्टवान् वप उप्तः उप्तवान् वह ऊढः ऊढवान् टुओश्वि शू

नः शूनवान् भाष्ये तु नेदमाख्यातम् ॥ शासिवसिघसीनां च ८।३।६०। शास वस(

घस्लृ इत्येतेषां धातूनामवयवस्य सः इत्येतस्य इणकवर्गाभ्यां परस्य सः पदान्तस्य मूर्द्धन्य(

आदेशः स्यात् शास अन्वशिषत् अन्वशिषताम् अन्वशिषन् शिष्टः शिष्टवान् वस उष

तः उषः उषितः उषितवान् घस्लृ जक्षतुः जक्षुः अदतेर्भीमदनं इणकोः किम् शास्ति

वसति उवास आदेशाकेशशकाराभावात्पूर्वसूत्रेणाषःप्राप्तौवचनम् इदंसूत्रम्भाष्यकृतान
व्याख्यातम् ॥ वेञोवयिः २।४।४१ वेञ् इत्येतस्यधातोर्लिटिपरेवयिरित्यादेशोवास्यात् इ
कारउच्चारणार्थः उवाय ऊयतुः ऊयुः लिटिवयोयः इतियकारस्यसंप्रसारणनिषेधः वस्या
न्यतरस्यामितिवकारादेशपक्षे ऊवतुः ऊवुः वयादेशाभावे ववौ ववतुः ववुः वेञः।
निसंप्रसारणनिषेधः ॥ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनांङिति च
६।१।१६। ग्रह ज्या वेञोवयिः व्यध वश व्यच ओव्रश्चू प्रच्छ भ्रस्जो इत्येतेषांधातूनांकि
तिङिति च संप्रसारणंस्यात् ग्रह गृहीतवान् जरीगृह्यते ज्या जीनवान् जेजीयते वेञो
वय् इत्येष आदेशः ऊयतुः ऊयुः ङितिनास्त्युदाहरणमस्य व्यध विद्धवान् वेविध्यते
वश उशितवान् उशन्ति व्यच विचितवान् वेविच्यते ओव्रश्चू वृक्णवान् वरीवृश्च्यते प्र
च्छ पृष्टवान् परीपृच्छ्यते भ्रस्ज भृष्टवान् बरीभृज्ज्यते वयिग्रहणंवेञः प्रतिषेधात् १ न

वापकारप्रतिषेधोज्ञापको ऽप्रतिषेधस्य २ पितस्यासार्थमिति चेन्नाविशिष्टत्वात् ३ ॥
लिटि वयो यः ६।१।३८ लिटि परे वय इत्येतद्वयपवस्य यइत्येतत्स्य सम्प्रसारणं न स्यात् ऊ-
यतुः ऊयुः लिटि इत्येतदुत्तरार्थम् भाष्ये तु नेदं व्याख्यातम् ॥ वश्चास्यान्यतरस्यां किति।
६।१।३९। वयो यकारस्य किति लिटि परे वकारादेशो वा स्यात् ऊवतुः ऊवुः किति कि-
म् उवाय ॥ वेञः ६।१।४०। वेञ् इत्येतस्य धातोर्लिटि परे सम्प्रसारणं न स्यात् ववौ ववतुः
ववुः इत्यादि सूत्रपञ्चकं भाष्ये तु न व्याख्यातम् ॥ न व्यो लिटि ६।१।४६ व्येञ् इत्येतस्य
धातोर्लिटि परे आकारादेशो न स्यात् विव्याय विव्ययिथ इत्यादि सूत्रद्वयं भाष्ये तु न व्या-
ख्यातम् ॥ अभ्यस्तस्य च ६।१।३३ ह्वेञ् इत्येतस्याभ्यकारणस्य सम्प्रसारणं स्यात् हि-
वात्वाक् सम्प्रसारणम् जुहाव जोहूयते जोहवीति अभ्यस्तनिमित्तेः न भ्यस्तसम्प्रसार-
णार्थम् १ हृदन्तप्रतिषेधार्थं वा अभ्यस्तनिमित्त इति वक्तव्यम् २ ॥ लिपिसिचिहृश्च
३।१।५३

प्र.क्रि.
कौ.३.
५५

लिपि षिचि ह्वेञ् इत्येतेभ्यः परस्य च्लेरङादेशः स्यात् अलिपत् असिचत् आह्वत् यो।
गविभाग उत्तरार्थः इत्यादिसूत्रपञ्चकं भाष्ये तु न व्याख्यातम् ॥ आत्मनेपदेष्वन्यतरस्याम्
३।१।५४। लिपि षिचि ह्वेञ् इत्येतेभ्यः परस्य च्लेरङादेशः स्यात् अलिपत असिचत आ
ह्वत् योगविभाग उत्तरार्थः इत्यादिसूत्रपञ्चकं भाष्ये तु न व्याख्यातम् ॥ विभाषा धेट्श्व्योः ३।१।
४९। टुओश्वि इत्येतस्य धातोर्लिटि यङि च सम्प्रसारणं वा स्यात् शुशाव शिश्वाय शुशुवतुः
शिश्वियतुः यङ् शोशूयते शेश्वीयते उभयत्र विभाषा चेयम् । श्वयतेर्लिटभ्यासलदाण।
प्रतिषेधः । शिश्वियतुः शिश्वियुः ॥ श्वयतेरः ७।४।१८ टुओश्वि इत्येतस्य धातोरङ् प्रत्य
ये परे अ इत्ययमादेशः स्यात् अश्वत् अश्वताम् अश्वन् ॥ अर्त्तेरीयङ् ३।१।२९। ऋत्
त इति सौत्रो धातुर्घृणायां वर्त्तते तस्मादीयङ् स्यात् ङित्वादात्मनेपदम् ऋतीयते ऋती
येते ऋतीयन्ते ऋतेश्चाङिङ् निवृत्त्यर्थ ईयङ् विधानं तत्तायपति पातु विच्छिनानां प्रत्ययानामा

५५

यत्राद्योनभवन्तीति ॥ अदिप्रभृतिभ्यः शपः २।४।७२। अद इत्येवमादिभ्यो धातुभ्यः पर
स्य शप् इत्येतस्य लुक् स्यात् अत्ति हन्ति द्वेष्टि ॥ लिट्यन्यतरस्याम् २।४।४०। अदो लिटि घ
स्लादेशो वा स्यात् जघास जक्षतुः जक्षुः आद आदतुः आदुः ॥ हुझल्भ्यो हेर्धिः ६।४।
१०१ हु इत्येतस्मात् झलन्ताच्च धातोः परस्य हलादेर्हेर्धिरित्येतस्यापि इत्येष आदेशः स्यात् हु
जुहुधि झलन्तेभ्यः छिदिर् छिन्द्धि भिदिर् भिन्द्धि हुझल्भ्यः किम् डुक्रीञ् क्रीणीहि हेः
किम् जुहुताम् छिन्ताम् हलादेः किम् रुदिहि स्वपिहि इटः प्रतिषेधो वक्तव्यः १ हेर्धित्वे
ऽपित्कारादिष्टोऽप्रतिषेधः २ अनर्थकः प्रतिषेधोऽप्रतिषेधः प्रकृते हलग्रहणमनुवर्त्त
ते घसिभसोर्हलीति इति भाष्यम् ॥ अदः सर्वेषाम् ७।३।१००। अद इत्येतस्मात् परस्या
पृक्तस्य सार्वधातुकस्य गार्ग्यगालवयोर्मते अट् इत्ययमागमः स्यात् आदत् आदः अपृक्तस्य किम् अ
त्ति अत्सि ॥ लुङ्सनोर्घसॢ २।४।३७ अद इत्येतस्य लुङि सति च परे घसॢ इत्ययमादेशः

सू.सि.
कौ.उ.
५६
56

स्यात् ल्यादिकरणामङ्ग्यर्थम् अघमत् अघहानाम् अघमन् जिघत्मनि जिघत्मनः जिघत्सानि घ
ह्स्भावेस्य च्युपसंख्यानम् १ प्रकर्षेणाघ्नतीति प्रघमः ॥ अनुदात्तोपदेशवनतितनोत्यादीनामनु
नासिकलोपो झलि क्ङिति ६।४।३७॥ अनुदात्तोपदेशानां वन इत्येतस्य तनोत्यादीनां च झला
दौ क्ङिति तिच्प्रत्यये परे ऽनुनासिकलोपः स्यात् यम रम णम हम गम्लृ मन इत्येते ऽनु
नासिकान्ता अनुदात्तोपदेशाः यमु यतः यतवान् यत्वा यतिः इत्यादि वम वतिः तनु क्षणु
क्षिणु ऋणु तृणु घृणु वनु मनु इत्येते तनोत्यादयः ततः ततवान् तत्वा ततिः इत्यादि झलीति अत
न अतया इत्यादि अनुदात्तत्वादि किम् शान्तः अनुनासिकस्य किम् पक्वः झलि किम् ग
म्यते क्ङितीति किम् यन्ता उपदेशग्रहणात् किम् इह यथा स्यात् यतिः गतिः इह च मा भू
त् शान्तः अनुदात्तोपदेशोऽननुनासिकलोपोल्यपि च १ मन प्रमत्य तनु प्रतत्य नमोवाऽमः २
यम प्रयत्य प्रयम्य रम प्ररत्य प्ररम्य णम प्रणत्य प्रणम्य ॥ वमोर्वा ८।४।२३। हन इत्येतस्य

धातोरवयवस्तन् इत्येतस्योपसर्गस्थाद्रेफात्परस्य णः इत्येष आदेशो वा स्यात् वमइत्येतयोः प
रतः प्रहण्वः प्रहन्वः परिहण्वः परिहन्वः प्र प्रहण्मि प्रहन्मि परिहण्मि परिहन्मि प्र
हण्मः प्रहन्मः परिहण्मः परिहन्मः सर्वत्रैवात्र नित्यप्राप्ते विकल्पार्थमिदम् इत्यादि पञ्च
सूत्राणि भाष्यकृता न व्याख्यातानि ॥ अभ्यासाच्च ७।३।५५ अभ्यासात्कुत्वम् स्यात् । इह
माभूत् हननमिच्छति हननीयति तस्मात्क्विप् हननीयतीति ॥ हन्तेर्जः ६।४।३६
। हन इत्येतस्य धातोर्हौ परे ज इत्येष आदेशः स्यात् जहि शत्रून् ॥ हनो वध लिङि २।४।४२
॥ हन इत्येतस्य धातोर्लिङि परे वध आदेशः स्यात् वध्यात् वध्यास्ताम् वध्यासुः किमर्थमदन्तः
आदेशो नास्ति व्यञ्जनान्तः क्रियते यदि व्यञ्जनान्तः वधो व्यञ्जनान्ते उक्तम् किमुक्तम् वध्यादे
शो हलन्तयोः प्रतिषेधः स इति विभाषेति अथादन्ते न दोषो भवति यथा न दोषस्तथास्तु इति भा
ष्यम् ॥ लुङि च २।४।४३ । हनो वध आदेशः स्याल्लुङि परे अवधीत् अवधिष्टाम् अवधिषुः

छ.का.
को.३.
५७
57

वधादेशोऽदन्तः अतो लोप इत्यकारलोपः तस्य स्थानिवद्भावाद्धलन्तलक्षणा अतो हलादे
र्लघोरिति वा वृद्धिर्न भवति योगविभाग उत्तरार्थः आत्मनेपदेष्वलिङि विकल्पामाभूत् भाष्ये तु
एयङ् इ. दं व्याख्यातम् ॥ णिपश्च २।४।१११। णिप इत्येतस्मात्परस्य लङादेशस्य फेर्ण्सस्मात्।
शाकटायनस्य मतेन अद्विषुः अन्येषां मतेन अद्विषन् ॥ चक्षिङः ख्याञ् २।४।५४। चक्षिङ्
इत्येतस्य धातोः ख्याञ् इत्ययमादेशः स्यात् आर्द्धधातुके आख्याता आख्यातव्यम् स्थानिवद्भा
वेन नित्यमात्मनेपदं न तु न भवति ञकारात्तु उभयकरणसामर्थ्यात् क्शादिरयमादेशः क्शा
ता क्शातव्यम् असिद्धेशस्य विभाषा यत्वं वक्तव्यम् । पूर्वत्रासिद्धमित्यधिकारेण त्वानन्तरं
शस्य यत्वं विभाषेति वक्तव्यमित्यर्थः सोऽपाख्यो पः छ्रदाच्छोपभवति चक्षयोपयादिति ञ्जन
भवति आख्यातः संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं भवति ख्यानम् प्रमः ख्या
मयेत्र इति रूपं अन्त पर्याख्यानम् क्रमस्य इति ज्ञानेन नमः ख्याने शर्पूर्वे विसर्जनीयो भवति ञ

५७

स्वामस्लीयोनभवति सर्वत्रयत्वस्यासिद्धत्वात् वर्जनेप्रतिषेधः २ अवसेदस्याः परिसेदस्याः अस
नयोश्च १ अ अस् नवलोप्स्वः अन विव लणः वडुलेनणी ४ नणीति संज्ञाछन्दसोर्ग्रहणम्
पन्तत्वकरणोक्तंकार्यंसंज्ञाछन्दसोर्ग्रहणलेभवतीत्यर्थः अयम् अदोजग्धिरितिन वधकः एवुलिव
पादेशोभवति गाद्यम् इणश्चौणादिकेष्वपिनिगादेशोभवतिविवक्षणः अनुदात्तेतश्चहलादेरिति
प्रविख्याजादेशोन अनिरितिशति अनेवीभावात् ॥ वालिटि २।४।५५ चक्षिङःख्याजादेशोवा
स्यात्लिटि आचख्यौ आचख्यतुः आचख्युः आदेशाभावे आचचक्षे आचचक्षाते आचचक्षिरे
भाष्येतनैर्देश्याख्यात ॥ अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२। अस्यतेपरेण वच ख्या इत्येतेभ्यः
परस्मान्निरस्येतस्यअङ्इत्ययमादेशःस्यात् कर्तृवाचिनि लुङिपरे पर्यास्थत पर्यास्थताम् पर्या
स्थन्त वचपादेशःजादेशोवा अवोचत् अवोचताम् अवोचन् ख्यापात्स्वलिङादेशोवा आख्यत आ
ख्यताम् आख्यन् कर्तरिकिम् पर्यासिषातांगावौचतेन अस्यतिग्रहणमात्मनेपदार्थंपुषादित्वात् १

पू.ति.
कौ.३.
५८
58

कर्म्मकर्त्तरि च २॥ ईशः से ७।२।७७। ईश इत्येतस्मात्परस्य से इत्येतस्य सार्वधातुकस्येड् इत्येष आगा
मः स्यात् ईशिषे ईशिध्व ॥ ईडजनोर्ध्वे च ७।२।७८। ईड जन इत्येताभ्यां परस्य ध्वे इत्येतस्य से इत्येतस्य च।
सार्वधातुकस्येड् इत्येष आगमः स्यात् ईड ईडिषे ईडिध्वम् ईडिध्वे ईडिध्व जनी जनिषे जनिध्वम् ज
निध्वे जनिध्व छान्दसत्वाच्छपो लोपाभावः श्यनो लुक् जनरूपस्यापि श्लुविकरणस्य ग्रहणमत्रेष्य
ते इति काशिका व्यतिजज्ञिषम् व्यतिजज्ञिषे व्यतिजज्ञिध्वे व्यतिजज्ञिध्व षष्ठे ईशे स्येपि इडागमम्।
इष्यते इति काशिका ईशिषम् षइति क्रीतेनतस्य ग्रहणात् लङो षमिनेट् एकदेशविकृतन्यायेन लोटो ष
मिश्च का किमर्थो योगविभागः न ईशीड्जनो सेध्वे इत्येवोच्येत इति भाष्यम् दोषवान् गुरुश्च योगावि
भाग इत्येक एव योगः कर्त्तव्यः ईशीड्जनां सेध्वेयोरिति केयटः ॥ शीङो रुट् ७।१।६। शीङ इ
त्येतस्मात्परस्य झादेशस्यातः इत्येतस्य रुड् इत्येष आगमः स्यात् शेरते शेरताम् अशेरत यङ्लु
कप्यहस्वमर्थं स्यात् तु वन्यकयरुद्राणाम् रुविधिः शिगुणप्रतिशेधः १। रुडन्ते शीङो गुणविधिः २ का।

देशादाद्स्त्वेति २ विप्रतिषेधेनेति शेषः नवानित्यत्वादाटः ४ अंतरंगत्वदागात्वाद्व ५ ॥ उतो
वृद्धिर्लुकि हलि ७।३।८९ उ इत्येतदन्तस्याङ्गस्य हलादौ पिति सार्वधातुके परे लु
कि सति वृद्धिः स्यात् यु यौति यौषि यौमि णु नौति नौषि नौमि ष्टुञ् स्तौति स्तौषि स्तौ
मि उतः किम् इण् एति एषि एमि लुकि किम् सुनोति हलि किम् यवानि पिति किम्
युतः रुतः नाभ्यस्तस्येत्यनुवर्तते योयाति नोनोति इत्यादिस्त्वपभ्रंश एवेति न व्याख्यातम् ॥
तुरुस्तुशम्यमः सार्वधातुके ७।३।९५ — — ष्टुञ् शम अम इत्येतेभ्यः परस्य हलादेः सार्व
धातुकस्य पित ईड्वा इत्ययमागमः स्यात् तुरिति सौत्रो धातुः तवीति तौति रु रवीति रौति
ष्टुञ् स्तवीति स्तौति शम्यमोश्छान्दसत्वाद्विकरणलुकि संभवः शम शाम्यषम् शमिध्व
म् अम अभ्यमति अमिमीति पुनः सार्वधातुकग्रहणमपिदर्थम् स्तवीत शमीध्वम् अ
पिशालाः तुरुस्तुशम्यमः सार्वधातुके छन्दसि इति सूत्रमपठन्ति तन्मते सर्वे पामेव छन्दसि भ

वति इतिकाशिका अपिदर्थीयमारम्भः अधिगीशमीषम् मशामिशमीषम् शमीक्षमहि।
गो इतिभाष्यम् शमेरेतभावितएष्यीत्वेषेलोङ् व्यसयेनात्मनेपदम् शप् नस्यवकुलछन्द
सीतिलुक् इतिकैयटः ॥ ऊर्णोतेर्विभाषा १।२।३ । ऊर्णोञ् इत्येतस्माद्धातोर्हलादौ पि
तिसार्वधातुकेपरेवृद्धिर्वास्यात् ऊर्णौति ऊर्णोति ऊर्णौषि ऊर्णोषि ऊर्णौमि ऊर्णोमि
हलिकिम् ऊर्णवानि पितिकिम् ऊर्णुतः ॥ नन्द्राःसंयोगादयः ६।१।३ । न् द् र् इत्येते
द्वितीयस्यैकाचोऽवयवाआदिभूतादचःपराःसंयोगादयोनद्विरुच्यन्ते उन्दी उन्दिदिषति अ
ड्ड अड्डिडिषति अर्च्च अर्चिचिषति न्द्राःकिम् उच्छी उचिच्छिषति संयोगादयःकिम् अ
न प्राणिणिषति द्वितीयस्येत्येव दिदरिद्रासति आदिभूतादचःपराःकिम् इन्दिद्रीयि।
षति न्द्रादेर्द्विवचनप्रसंगमस्यवन्द्राणांप्रतिषेधः १ उच्यतइतिशेषः बकारस्याप्ययंप्रतिषेधो
वक्तव्यः २ इतिकाशिका उब्ज उब्जिजिषति दकारोपदेशेत्वनवक्तव्यः २ इतिकाशिका ववेत

सू.सि.
कौ.उ.
५९
59

५९

नद्राटकारस्य विधातव्यम् ३ इतिकाशिका यकारपरस्य प्रतिषेधोनभवतीतिवक्तव्यः ४ इतिका
शिका ॥ अरार्यते ईर्ष्यतेस्तृतीयस्यद्वेभवतः २ केचिदाहुस्तृतयस्यैकाचः ईर्ष्य ईर्ष्यिषिषति।
यपरम्याहस्तृतीयस्यव्यञ्जनस्येति ईर्ष्यियिषति ईर्ष्यतेस्तृतीयस्येतिवाच्यम् १ कंड्वादीनांच
३ तृतीयस्यद्वेभवतइत्येव कण्डूयियिषति कंड्वादीनांचतृतीयस्येतिवाच्यम् ४ इतिकाशिका
कंड्वादेस्तृतीयस्येतिवाच्यम् २ वानामधातूनां ४ तृतीयस्यैकाचोद्वेभवतइत्येव अश्वीयियिष
ति अशिश्वीयिषति वानामधातूनांतृतीयस्यद्वेभवतइतिवक्तव्यम् ६ इतिकाशिका यथे
ष्टंवा २इत्यपरस्य पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति पुत्रीयिषिषति यथेष्टंनाम।
धातुषु ० इतिकाशिका ॥ विभाषोर्णोः २।२।३। अयमविभाषेयम् ऊर्णुञ् अस्माप
रइआदिप्रत्ययोवाङित्स्यात् ऊर्णुविता ऊर्णविता ॥ गुणोऽर्त्तिसंयोगाद्योः ७।४।११। ऊर्णुञ् इत्यस्मा
तस्माः एकसंज्ञकेहलादौपिति सार्वधातुकेपरेगुणःस्यात् ऊर्णौत् ऊर्णोः ऊर्णोतीतिविभा

षेति ङ्कित्ययमपवादः अपृक्तग्रहणं यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषाज्ञापनार्थम् यस्मिन्विधिस्तदादाव
ल्ग्रहणे १ परिभाषेयम् ॥ ऊर्णोतेर्विभाषा ७।२।६। ऊर्णुञ् इत्येतस्य इडादौ सिचि परस्मै
पदेषु वृद्धिर्वा न स्यात् और्णावीत् और्णवीत् विभाषोर्णोः इति ङित्वपक्षे तु गुणस्य वृद्धिनिषेधा
दुवङ् भवति और्णुवीत् इत्यादि सन्देहयम्भाष्ये तु व्याख्यातम् ॥ ब्रुवः पञ्चानामादित आ
हो ब्रुवः ३।४। ८४ ब्रूञ् इत्येतस्मात्परेषां लडादेशानां परस्मैपदानामादितः पञ्चानां णल्
इत्येवमादयः पञ्च आदेशाः क्रमेण वा भवन्ति तत्संनियोगेन ब्रूञ् इत्येतस्य आह इत्ययमा
देशो भवति आह आहतुः आहुः आत्थ आहथुः न च भवति ब्रवीति ब्रूतः ब्रुवन्ति ब्रवीषि
ब्रूथः पञ्चानामिति किम् ब्रूथ ब्रवीमि ब्रूवः ब्रूमः आदितः किं परेषां मा भूत् पुनर्ब्रुवः
इति परस्मैपदानामादेशो मा भूदिति ॥ आहस्थः ८।२।३५। ब्रूञ् इत्येतस्य यो आहादेशस्त
स्य आह इत्येतस्यावयवस्य ह इत्येतस्य झलि परे थ इत्ययमादेशः स्यात् इदम् आत्थ किमात्थ झलि

सू० ती
को-३.
६०
60

किम् आह आहतुः आहुः पूर्वसूत्राद्धकारानुवृत्त्या सिद्धे फलमल्पयोर्योर्थस्य स्थानेऽप्रामयेत्या
देशान्तरविधानम् छन्दोर्थं छन्दसि इत्येतिवक्तव्यम् । इतिकाशिका ॥ ब्रुव ईट् ७।३।९३।
सूत्र इत्येतस्मात्परस्य हलादेः पितः सार्वधातुकस्य ईट् इत्ययमागमः स्यात् ब्रवीति ब्रवीषि
ब्रवीमि अब्रवीत् हलि किम् ब्रवाणि पिति किम् ब्रूतः इत्यादि सर्वत्र पञ्चमभाष्यतुल्यव्याख्यात
म् ॥ ब्रुवो वचिः २।४।५३ सूत्र इत्येतस्य धातोर्वचिरयमादेशः स्यात् आर्धधातुके इकार उ
च्चारणार्थः वक्ता वक्तारौ वक्तव्यम् स्थानिवद्भावेन कर्तृगामिनि क्रियाफले आत्मनेपदम्
ऊचे वक्ष्यते ॥ वच उम् ७।४।२०। वच इत्येतस्य धातोरङ्‌प्रत्यये परे ओ उम् इत्ययमागमः स्या
त् अवोचत् अवोचताम् अवोचन् ॥ इणो यण् ६।४। ८१। इण् इत्येतस्य धातोरजादौ प्रत्य
ये परे यण् स्यात् यन्ति यन्तु आयन् इयङोऽपवादकः गुणवृद्धिभ्यान्तु परत्वाद्बाध्यऽयमेव वा
ध्येते अयनम् आयकः ॥ दीर्घ इणः किति ७।४।६९। इण् इत्येतस्य धातोर्यीभ्यासस्य।

सू.सि.
कौ.३.
६१
6|

दीर्घो भवति किति लिटि परे इणः ईयतुः ईयुः इणो यणिति यणादेशे कृते तस्य स्थानिवत्त्वाद्द्विर्वचन
म् किति किम् इयाय इययिथ ॥ एतेर्लिङि ७।४।२४। इणः इत्येतस्य धातोरुपसर्गात्परस्याः
ऽणाय् इत्येतदादेशो किति लिङि परे ह्रस्वः स्यात् उदियात् समियात् अभियात् आशीर्लिङि।
अकृतस्य ईयात् कयोरिति दीर्घीकृतेः नेन ह्रस्वः उपसर्गात्किम् ईयात् अणः किम् आईया
त् एयात् समेयात् एतेर्लिङ्युपसर्गात्। इहमाभूत् ईयात् तत्र द्विवक्तव्यम् न वक्तव्यम् उ
पसर्गात्किम् ईयात् अणः किम् इति निवर्तते इति भाष्यम् ॥ इणो गा लुङि २।४।४५। इणः
इत्येतस्य धातोर्लुङि परे गा इत्ययमादेशः स्यात् अगात् अगाताम् अगुः अगा अपि भवता ॥ लु
ङीति वर्तमाने पुनर्लुङ्ग्रहणमात्मनेपदेष्वनतरस्यामित्येतन्निवृत्त्यर्थम् इणवदिक इति वक्त
व्यम् ॥ इकः अध्यगात् अध्यगाताम् अध्यगुः ॥ गाङ् लिटि २।४।४९। इङः इत्येतस्य गा
ङ् इत्ययमादेशः स्याल्लिटि विवक्षिते अधिजगे अधिजगाते अधिजगिरे गाङ्ङनुबन्धकरणं

६१

विशेषणार्थम् १ अविशेषणार्थे नर्थः गाङ्कुटादिभ्योऽञ्णिन्ङिदिति गाङ्कुटादिभ्य इत्यु-
च्यमाने इणादेशस्यापि प्रसज्येत इति भाष्यम् ज्ञापकं वा सानुबन्धकस्यादेशवचने इत्कार्याभाव-
स्य २ मेस्थानेऽनुबन्धकस्यादेशवचनम् ३ अनल्विधिमध्यनेमोऽिति तिप्सिप्मिपामिति वक्तव्य-
म् इहापि यथा स्यात् वेद वेत्थ असत्यापकस्य सन्ति दोषाः सन्ति प्रयोजनानि दोषाः समाभूयो
सो वा तस्माज्ज्ञार्थोऽनेन ज्ञापकेन इति भाष्यम् ॥ विभाषा लुङ्लृङोः २।४।५०। इङो गाङा-
देशो वा स्यात् लुङ्लृङोर्विषये आदेशपक्षे गाङ्कुटेति ङित्त्वम् घुमास्थेतीत्वम् अध्यगीष्ट अध्य-
गीषाताम् अध्यगीषत आदेशाऽभावे अध्यैष्ट अध्यैषाताम् अध्यैषत लृङि अध्यगीष्यत अध्य-
गीष्येताम् अध्यगीष्यन्त आदेशाभावे अध्यैष्यत अध्यैष्येताम् अध्यैष्यन्त इत्यादि सर्वं वस्तु-
ष्टयं भाष्येनैनव्याख्यातम् ॥ गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१। अतिदेशोऽयम् गाङादेशा-
कुटकौटिल्ये इत्यारभ्य कुङ् शब्दे इत्यन्ता ये कुटादयस्तेभ्यः परे ञिन्णिद्भिन्नाः प्रत्ययाः ङितस्सुः

घु.सी.
कौमु.
६२
62

गाङ् अध्यगीष्ट अध्यगीषाताम् अध्यगीषत कुटादिभ्यः कुटिता कुटितुम् कुटितव्यम् पुटिता पु
टितुम् इत्यादि अञ्णिदादिति किम् उत्कोटयति उत्कोटः भवतीति चेवादेशप्रतिषेधः १ सर्वत्रमत्र
न्तादात्मनेपदस्य प्रतिषेधः २ क्रायांकित्वप्रतिषेधस्त्र ३ चकारादिट् व्यचेः कुटादित्वमनसीति वक्तव्य
म् इति काशिका उद्विजिता अनसीति किम् उरुव्यचः व्यचेः कुटादित्वमनसि १ अनसीति पर्युदा
सेनाः स्थकृन्मात्रविषयत्वं बोध्यम् ॥ घुमास्थागापाजहातिसां हलि ६।४।६६॥ घुसंज्ञकानां
मा स्था गा पा ओहाक् षो इत्येतेषां वट्टलादौ क्ङिति परे ईत्स्यच्चादेशः स्यात् घु दीयते देदी
यते धीयते देधीयते मा मीयते मेमीयते स्था स्थीयते तेष्ठीयते इणादेशो गा गानत्वम्यः गीय
ते जेगीयते अध्यगीष्ट अध्यगीषाताम् पानार्थः पानग्रहः पीयते पेपीयते ओहाक् ही
यते जेहीयते षो अवसीयते अवसेषीयते हलीति किम् दधतुः क्ङितीति किम् दाता इति वका
रप्रतिषेधोच्छृतंहृतपावानंत्वनिदर्शनात् १ सततद्विप्रतिषेधोपलक्षणः नतक्रत्वः वतिषेधभवित

६२

ति॰ नक्कत्निप् इति भाष्यम् ॥ लङः शाकटायनस्यैव ३।४।१११। आकारान्तात्परस्य लङो झेर्जुस्
केर्जुस्स्यात् शाकटायनस्याचार्यस्य मतेन अयुः अवुः अन्येषां मतेन अयान् अवान् ननु इति न
इमन्नुवर्तते तत्र लङः वाकारान्तादनन्तरः सम्भवति नायमनुवर्तते किं लङ्ग्रहणेन एवन्तर्हि लङे
वेति लङः नस्यप्यस्मात् लङः ज्ञापनार्थो लङ् तस्मिन्नु समासेऽभूदिति यान्तु वान्तु विध्यतु वि
न्दतु एवकारश्च अन्यार्थः इत्यादि सर्वं भाष्येणैव व्याख्यातम् ॥ विदो लटो वा ३।४।८३। वि
द् इत्येतस्माज्ज्ञानार्थात्परेषां लडादेशानां परस्मैपदानां णलादयो नव आदेशाः क्रमे।
ण वा भवन्ति वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म न च भवति वेत्ति वि
त्तः विदन्ति वेत्सि वित्थः वित्थ वेद्मि विद्वः विद्मः इत्यादि सर्वं भाष्येणैव व्याख्यातम् ॥
विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३।१।४१। विदाङ्कुर्वन्तु इत्येतद्वा निपात्यते किं पुनरिह निपा
त्यते वेत्तेर्लोटि परे आम्प्रत्ययो विदाङ्कुर्वन्तु इत्येतद्वा निपात्यते किं यः गुणाभावः लोटो।

लुक् लोडपरकस्य कृञोऽनुप्रयोगश्च निपात्यते इतिकरणः प्रदर्शनार्थः नैकवचनं प्रथमपुरुष।
बहुवचनम् किन्तर्हि सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते विदांकरोतु विदांकुरुतात् विदांकुरु।
ताम् विदांकुर्वन्तु पक्षेवेत्तु वित्तात् वित्ताम् विदन्तु इत्यादि सर्वं भाष्यमतेन व्याख्यानम् ॥
तनादिकृञ्भ्य उः ३।१।७९। शपोऽपवादः ननु इत्येवमादिभ्यो यान्तु भोऽकृञ्ग्रहणं तस्मात्तदुप।
त्यस्मात् तनोति सनोति करोति कुरुतः कुर्वन्ति तनादित्वात्कृञः सिद्धे सिद्धे लोपे च न ज्ञापयति
चिण्वद्भावे न दोषः स्यात्तोः पिपोको विभाषया १ कार्त्तिकेयम् गणकार्यमनित्यम् १ संज्ञा
पूर्वको विधिरनित्यः २ आगमशास्त्रमनित्यम् ३ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ४ न
ञ्घटितमनित्यम् ५ आतिदेशिकमनित्यम् ६ सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ७
प्रकृतिवदनुकरणे लुगन्तस्यापि ग्रहणम् ८ विधौ परिभाषोपतिष्ठते नानुवादे ९ परिभाषा
इमाः प्राचीनमते भाष्येऽदर्शनान्निर्मूला एता इति तु नवीना वदन्ति स्म ॥ अतउत्सार्वधातुके ६।४।
११०

उप्रत्ययान्तस्य कृञोऽकारस्य उ इत्येष आदेशः स्यात् सार्वधातुके क्ङिति परे कुरुतः कुर्वन्ति कु
रुथः कुरुथ कुर्वः कुर्मः उत इति तपरकरणं वृद्ध्यादिगुणनिवृत्त्यर्थम् सार्वधातुके किम् भूतशेषे
ऽपि सार्वधातुके यथा स्यात् कुरु इति क्ङिति किम् करोति करोषि स्यान्नस्य प्रतिषेधो वक्त
व्यः १ कृञ उत उकारान्तनिर्देशात् स्यान्नस्याऽप्रतिषेधः इति भाष्यम् ॥ दश्च २।२।७५। वृ इ
त्येतस्य धातोरवयवस्य पदान्तस्य सिपि प्रत्यये परे रु इत्ययमादेशो द् इत्ययमादेशश्च वा स्यात् वि
द अवेः अवेत् अवेद् भिदिर् अभिनः अभिनत् अभिनद् छिदिर् अछिनः अछिनत् अछि
नद् ॥ श्नसोरल्लोपः ६।४।१११ श्नम् अस् इत्येतयोरकारस्य लोपः स्यात् सार्वधातुके क्ङि
ति प्रत्यये परे श्नम् रुधिर् रुन्धः रुन्धन्ति भिदिर् भिन्तः भिन्दन्ति अस् स्तः सन्ति क्ङिति कि
म् छिनत्ति भिनत्ति ॥ अस्तेर्भूः २।४।५२। अस् इत्येतस्य धातोर्भू इत्ययमादेशः स्यात् आर्धधातु
के भविता भवितारौ भवितारः भवितुम् भवितव्यम् ॥ घसोरेद्धावभ्यासलोपश्च ६।४।११९

घुसंतकानाम् अस इत्येतस्य च ए इत्येष आदेशः स्यात् घ्विप्रत्यये परे तत्सन्नियोगेनाभ्यासस्य लो
पश्च भवति देहि धेहि अस एधि असोरित्याकारलोपः लोपश्च इति शकारः सर्वादेशार्थः ॥ ॥
उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७। उपसर्गस्थान्निमित्तात् इणः प्रादुस् इत्येतस्माद्वा यकाराच्पर
स्य अस् इत्येतस्य धातोरवयवस्य स इत्येतस्य मूर्द्धन्य आदेशः स्यात् इत्येतस्मिन् परतोऽचनाद्यागन्
गीतवर्णो च परे उपसर्गाणाः यकारे अभिष्यात् निष्यात् विष्यात् अचि अभिषन्ति निषन्ति वि
षन्ति प्रादुषः यकारे प्रादुःष्यात् अचि प्रादुःषन्ति उपसर्गात्किम् दधि स्यात् मधु स्यात् अ
स्ति किम् अनुसूतम् विसृतम् यच्परः किम् अभिस्तः निस्तः विस्तः प्रादुःस्तः ॥ ॥
मृजेर्वृद्धिः ७।२।११४। मृज् इत्येतस्य ऋकारस्येको वृद्धिः स्यात् मार्ष्टा मार्ष्टुम् मार्ष्टव्यम् मृ
जेर्वृद्धिविधौ क्ङिति प्रतिषेधः १ कंसपरिमृड्भ्याम् कंसपरिमृड्भिः धातोः स्वरूपग्रहणे तत्प्रत्यये
कार्यविज्ञानात् सिद्धम् २ धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति १ परिभाषेयम् ॥ ॥

प्र० शि०
कौ० उ०
६४
64

रुदादिभ्यः सार्वधातुके ७।२।७६। रुदिर् ञिष्वप् श्वस् अन जक्ष इत्येतेभ्यः पञ्चभ्यः पर
स्य वलादेः सार्वधातुकस्य इट् इत्येष आगमः स्यात् रुदिर् रोदिति ञिष्वप् स्वपिति श्वस
श्वसिति अन अनिति जक्ष जक्षिति पञ्चभ्यः किम् जागर्ति सार्वधातुके किम् स्वप्ता व
लादेः किम् रुदन्ति ॥ रुदश्च पञ्चभ्यः ७।३।९८। रुदिर् ञिष्वप् श्वस अन जक्ष इत्येतेभ्यः
पञ्चभ्यः परस्या ऽ——— पितः सार्वधातुकस्य हलादेः ईट् इत्येष आगमः स्यात् रुदिर् अरोदी
त् अरोदीः ञिष्वप् अस्वपीत् अस्वपीः श्वस अश्वसीत् अश्वसीः अन आनीत् आनीः ज
क्ष अजक्षीत् अजक्षीः पञ्चभ्यः किम् जागृ अजागर्भवान् अपृक्तस्य किम् रोदिति ॥
अड्गार्ग्यगालवयोः ७।३।९९। रुदिर् इत्येवमादिभ्यः पञ्चभ्यः परस्याऽपृक्तस्य पितः सार्वधा
तुकस्य हलो गार्ग्यगालवयोराचार्ययोर्मतेऽट् इत्येष आगमः स्यात् अरोदत् अरोदः अस्व
पत् अस्वपः अश्वसत् अश्वसः आनत् आनः अजक्षत् अजक्षः गार्ग्यगालवग्रहणं पूजार्थम्।

सू.ति.
कौ.उ.
६५
65

ज्ञार्थम् ॥ सुविनिर्दुर्भ्यः सुपिसूतिसमाः ८।३।८८। सु वि निर् दुर् इत्येतेभ्य उपसर्गेभ्यः पर
स्य सिषप् सूडु षम इत्येतेषां धात्वान्नामवयवस्य इत्येतस्य मूर्द्धन्य आदेशः स्यात् सूडु ष
म इत्येतेषां धात्वान्नामवयवस्य इत्येतस्य मूर्द्धन्य आदेशः स्यात् सिषप् सुषमः विषमः
निःषमः दुःषमः सुषुप्सतः सुषुपुः इत्यत्र तु उपसर्गेणाप्रयुज्यत इति दर्शनेन किति लि
टि परत्वात् संप्रसारणे षत्वे च कृते च कृते द्वित्वम् द्वित्वे कर्तव्ये षत्वस्यासिद्धत्वं भवति सर्वत्रा
सिद्धीयमद्विर्वचनस्य सुतेः सूडु क्तिन्नन्तः सुषूतिः निःषूति दुःषूतिः षम सुषमम् वि
षमम् निःषमम् दुःषमम् स्वपिः कृतसंप्रसारणो गृह्यते इति काशिका सूतिरिति।
स्वरूपग्रहणम् इति काशिका सुषेः षत्वं स्वपेर्मा भूदि सुषापयतिकेनन हलादिःशेषा।
न्मस्य पिरिशेष्ठं संप्रसारणम् स्यादीनां नियमो नात्र प्राक्सिताड्व्यवायेऽपि सुपिः अनर्थके विषु।
षुपुः सुपिभूतो द्विरुच्यते २ कारिकेयमे ॥ अनितेः ८।४।१९ अन इत्येतस्य धातोरवयवस्य

६५

न् इत्येतस्यापसर्गीस्याद्ङ्कारान्तस्य स्मरण इत्ययमादेशः स्यात् माणिणोति पराणिणोति भा॰
ष्यकृतात्तस्त्रत्दयमेकीकृत्यपठितमनितेऽन्त इति ॥ अदभ्यस्तात् ७।१।४। झ इत्येतस्मा
ऽभ्यस्तसंज्ञकाद्ङ्गात्परस्यात् इत्ययमादेशः स्यात् ददति ददतु दधति१ धत्त जक्षति ज
क्षतु जाग्रति जाग्रतु सर्वस्यायमपवादोयम् अनुस्वारादेशेन न बाध्यते अदद्धः अदधुः इत्यादिरु
न्नयमभ्यासेन व्याख्यानम् ॥ जाग्रोऽविचिण्णल्ङित्सु ७।३।८५। जागृ इत्येतस्याऽङ्गस्य
गुणः स्यात् विचिण्णल्ङित् इत्येतेभ्योऽन्यस्मिन्प्रविभक्तिविषये प्रतिषेधविषयेऽपि हलादिविषये जा
गरयति जागरकः साधुजागारी जागरं जागरम् प्रतिषेधविषये जागरितः जागरितवान्
अविचिण्णल्ङित्स्विति किम् वि जागृविः चिण् अजागारि णल् जजागार ङित् जागृतः
जागृयुः यासुट्प्रतिषेधेऽपि गुणप्रतिषेधप्रसङ्गः १ अजागरुः उत मे च णालि २ अदंजा
गर नत्वैकारस्य प्रतिषेधात् ३ अतोऽनुत्तविधानो वा वा गुणान्तम् ४ जागृविः स्वपर्षयेदास॰

पू. पी.
को. ३.
६६
66

सामर्थ्यात् ५ वस्वर्थमितिचेन्न सार्वधातुकत्वात्सिद्धम् ६ ॥ जुसि च ७।३।८३। अजादौ जु
सिप्रत्यये परे इगन्तस्याङ्गस्य गुणः स्यात् ऊ अजुहवुः अबिभयुः अबिभरुः अ
जादौ किम् बिभृयुः सनुयुः जुसिगुणो यासुट्प्रतिषेधः १ बिभृयुः सनुयुः न वक्तव्यः अची
तिवर्त्तते तेन न संविशेषयति यासुटः अनभ्यस्तो जुसीति इति भाष्यम् ॥ इद्दरिद्रस्य ६।४।११४
दरिद्रा इत्येतस्याऽऽकारस्य इकार आदेशः स्यात् हलादौ क्ङिति सार्वधातुके परे दरिद्रितः
दरिद्रितः दरिद्रिथः दरिद्रिथ दरिद्रिवः दरिद्रिमः हलादौ किम् दरिद्रति क्ङिति किम् द
रिद्राति दरिद्रातेरार्धधातुके लोपः १ दरिद्रातेरार्धधातुके आलोपो वक्तव्यः १ इति काशिका
सिद्धश्च प्रत्ययविधौ २ दरिद्रातीति दरिद्रः आर्धधातुके इति विषयसप्तमीत्यर्थः अन्यथा ण्वा
वैवेति णप्रत्यये कृते आकारलोपे असिद्धत्वादाऽऽतो युगिति युक् स्यात् सिद्धश्च प्रत्ययविधौ स
भवतीति वक्तव्यम् २ इति काशिका दरिद्रातेरार्धधातुके विवक्षिते आतो लोपो वक्तव्यः लुङि

६६

वा मनितावलिस्तुदिवन अयतमोवा २ अयतनीतिल्लुङः वेला अटरिहीत अटरिह्लासीत अ
यतमोवेतिवक्ष्यम् २ इतिकाशिका नटरिह्लायकेलोपाटरिह्लणोवनेष्यते दिदरिह्लासतीमे
केटिदरिहिषतीतिवा १ कारिकेपम ॥ श्नाभ्यस्तयोरातः ६।४।११२। श्ना अभ्यस्तसंतक २
तेतयोर्यआकारस्तस्यलोपःस्यात् सार्वधातुकेक्ङितिपरमयेपरे श्ना लूञ् लुनते लुनता
म् अलुनत अभ्यस्तानाम् डुमिञ् मिमते मिमताम अमिमत ओहाङ् सजिहते संजि
हताम् समजिहत श्नाभ्यस्तयोः किम् यान्ति आतः किम् बिभ्रति क्ङितिकिम् असुना
त् इत्यादिस्तुत्रद्वयंभाष्येतनव्याख्यातम् ॥ निप्यतस्ति ६।४।१४२ निपपरतयेपरोस्त इत्येतदन्त
स्यपदस्यद इत्येषआदेशः स्यात् असरस्येतस्यतनभवति चकारस अचकात् अचकाद्।
शासु अन्वशात् अनुशाद् तिपिकिम् चकाः चकास्तेःकिप्यिरुपमेतत् अनेस्तेः किम्
आपपवेदंसर्वमाः अस्तेलोडि तिपिछान्दसत्वादीडभावः इत्यादिपञ्चसूत्राणिभाष्यकृ

तान्याख्यातानि ॥ सिपिधातोरुर्वा ८।२।७४। सिपप्रत्यये परे धातोरवयवस्य पदान्तस्य इति
तस्य रु इत्ययमादेशो वा इत्ययमादेशश्चवास्यात् चकास्ते अचकाः अचकात् अचकाद् शा
स्तु अन्वशाः अन्वशात् अन्वशाद् ॥ शास इद् अङ् हलोः ६।४।३४ शास इति तस्योपा
धासत्कस्य इ इत्ययमादेशः स्यात् अङि हलादौ च क्ङिति परे अङि अन्वशिषत्
अन्वशिषताम् अन्वशिषन् हलादौ क्ङिति शिष्टः शिष्टवान् ङिति नो शिष्टः आशीशिषः अङ्
हलोः किम् शशासतुः क्ङितिकिम् शास्ति शास इत्वे आशासः क्वौ उपसंख्यानम् १ आशीः क्वौ
उपसंख्यानम् १ आशीः क्वौ च शास इत्वं भवतीति वक्तव्यम् १ इतिकाशिका शास मित्रशीः ॥
क्वौ २ आङ् इद्वाच्य ३ शास आङ् इद्वः आशीः आशिषौ पदान्तपरमिदं वार्त्तिकरूपम् क्वि
प प्रत्ययेन साधीत्वं भवतीति वक्तव्यम् २ इतिकाशिका आङः शास्युरच्छार्थः आशीः आशि
षौ आशिषः दिव्याशीः प्रैषषतिष्ठाकाङ् दामिति निपातनाद्धासिद्धम् ॥ हाशी ६।४।३५।

मू. सि
कौ. ३.
६२
67

६०

ष्ट॰ कौ॰
३२९
326

प्राण्यङ्गादिति वक्तव्यम् २ इह मा भूत् चिकीर्षावान् प्राण्यङ्गादेव १ ॥ सिध्मादिभ्यश्च ५।२।९७
सिध्म इत्येवमादिभ्यो मत्वर्थे वा लच् स्यात् सिध्मलः सिध्मवान् सिध्म गडु मणि नाभि बीज वीणा
कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु मांस पार्ष्णि धमनी ग्रीवा विस्न वातदन्तबलललाटाना।
म्ऊङ् च जटाघटाकटाकालाः क्षेपे पर्णि उदक प्रज्ञा सक्थि कर्ण स्नेह चट्ट कपि गण्डु ग्रन्थि श्री
कुशा धारा वर्ष्मन् पक्ष्मन् श्लेष्मन् पेश निष्पाद् कुण्ड क्षुद्रजन्तूपतापयोश्च सिध्मादिः लच्।
मतरस्यामिति समुच्चयः १ लच्प्रकरणे पिच्छादिभ्यस्तुन्दादीनीनां नानायोगकरणं ज्ञापकं सम
मावेशस्य २ इतिः ठनोरिति विशेषः वस्यच पुनर्वचनं सर्वविभाषार्थम् ३ एतदुभयं नित्यार्थमेके ऽन्यतरस्यां
ग्रहणमिच्छन्ति ४ ॥ वत्सांसाभ्यां कामबले ५।२।९८ वत्स अंस इत्येताभ्यां क्रमात् कामे बलवति
च वाच्ये मत्वर्थे लच् स्यात् वत्सलः अंसलः कामबले किम् वत्सवती गौः अंसवान् दुर्बलः इत्यादि
प्रदर्शयं भाष्येतुनव्याख्यातम् ॥ फेनादिलच्च ५।२।९९ फेन इत्येतस्मान्मत्वर्थे इलच् लच् इत्येतौ प्रत्ययौ

वाभवतः फेनिलः फेनलः फेनवान् ॥ लोमादिपामादिपिच्छादिभ्यः शनेलचः ५।२।१०० लोमादि
भ्यः पामादिभ्यः पिच्छादिभ्यश्च मत्वर्थे यथाक्रमं श न इलच् इत्येते प्रत्यया भवन्ति लोमशः लोमवान्
पामनः पामवान् पिच्छिलः पिच्छावान् लोमन् रोमन् वभ्रु हरि गिरि कर्क कपि मुनि तरु लो
मादिः पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु वलि सामन् ऊष्मन् कृमि अङ्गात्कल्याणे शाकी
पलालीदद्रूणां ह्रस्वत्वं च विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः लक्ष्म्या अच्च पामादिः पिच्छा उरस्
ध्रुवक ध्रुवक जटाघटाकालाः क्षेपे इति उदक पङ्क प्रज्ञा पिच्छादिः नप्रकरणे दद्र्वा ह्रस्वत्वं च १ शा
कीपलालीदद्र्वा ह्रस्वत्वं वेति वक्तव्यम् १ इति भाष्यकृतः शाकिनम् पलालिनम् दद्रुणम् विष्वगि
त्युत्तरपदलोपश्चाकृतसन्धेः २ विष्वगस्त्यस्य विषुणः ॥ प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ५।२।१०१ प्रज्ञा
श्रद्धा अर्चा इत्येतेभ्यो मत्वर्थे णः स्यात् प्राज्ञः प्रज्ञावान् श्राद्धः श्रद्धावान् आर्चः अर्चावान् प्रज्ञा
श्रद्धार्चावृत्तिभ्यो णः इति पाठस्तु यावककाशिकायाम् वृत्तेश्च २ वार्त्तम् ॥ तपःसहस्राभ्यां विनीनी ५

स·कौ
२२०
327

२।९२ तपस् सहस्र इत्येताभ्यां क्रमादणिनावर्थे विनि इनि इत्येतौ प्रत्ययौ भवतः तपसी सहसी यस्मान्
त्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणो बाधनार्थमिति सहस्रात्तु पूर्वेणापि बाध्येत एतयसोर्विन्वचनम्
मविधानात् १ ॥ अण् च ५।२।१०३ तपस् सहस्र इत्येताभ्यां मत्वर्थे ऽण् स्यात् तापसः साहस्रः
अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् १ ज्योत्स्नादिभ्य उपसंख्यानम् १ ज्यौत्स्नः ज्योत्स्ना तमिस्र
कौण्डल कुतप विसर्प विपादिका ज्योत्स्नादिः ॥ सिकताशर्कराभ्यां च ५।२।१०४ सिकता शर्क-
रा इत्येताभ्यां मत्वर्थे ऽण् स्यात् सैकतो घटः शार्करं मधु इत्यादिसूत्रद्वयं भाष्येन व्याख्यातम् ॥
देशे लुबिलचौ च ५।२।१०५ सिकता शर्करा इत्येताभ्यां देशे वाच्ये मत्वर्थीयस्य लुप् स्यात् इलच् प्र-
त्ययश्च चकारादणमनुप् च सिकता सिकतिलः सैकतः सिकतावान् शर्करा शर्करिलः शार्करः
शर्करावान् देशे किम् सैकतो घटः शार्करं मधु ॥ दन्त उन्नत उरच् ५।२।१०६ दन्त इत्येतस्मादुन्नतो
पाधिकादुरच् स्यात् उन्नता दन्ता यस्य दन्तुरः उन्नतः किम् दन्तवान् ॥ ऊषसुषिमुष्कमधो रः ५।२।१०७

एम
२२०

ऊष सुषि मुष्क मधु इत्येतेभ्यो मत्वर्थे रः स्यात् ऊषरः सुषिरम् मुष्करः मधुरः रप्रकरणे खमुख
कुञ्जेभ्य उपसंख्यानम् १ खं मदः कण्ठविवरमस्यास्ति खरः मुखे मुखरः कुञ्जो हस्तिदन्तः
कुञ्जरः नगाच्च २ नगपांसुपाण्डुभ्यश्च २ इति काशिका नगरम् पांसुरम् पाण्डुरः कच्छ्वा ह्रस्
त्वं च इति काशिका कच्छुरः ॥ द्युद्रुभ्यां मः ५।२।१०८ द्यु द्रु इत्येताभ्यां मत्वर्थे मः स्यात् द्युमः द्रुमः
भाष्ये तु नेदं व्याख्यानम् ॥ केशाद्वोऽन्यतरस्याम् ५।२।१०९ केश इत्येतस्मान्मत्वर्थे वप्रत्ययो वा स्यात्
अन्यतरस्यां ग्रहणमिनिठनोः समुच्चयार्थम् केशवः केशी केशिकः केशवान् वप्रकरणे मणि
हिरण्याभ्यामुपसंख्यानम् १ मणिवः हिरण्यवः वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् १
मणिवः हिरण्यवः अन्येभ्योऽपि दृश्यत इति वक्तव्यम् १ इति काशिका मणिवः हिरण्यवः कु
रवः कुमारकः इष्टकावः राजीवः अर्णसो लोपश्च २ इति काशिका अर्णवः छन्दसीवनिपौ च
२ चकाराद्ध्रस्वमप्युच्च ई रथीरभून्मुद्गलानी सुमङ्गलीरियं वधूः । ५ः वनिप् मघवानमीमहे वा

सकौ
२२८
328

मतुपो ऽन्यत्राप्युदन्तीव मेधारथाभ्यामिरन्निरचौ वक्तव्यौ २ छन्दसीमेव मेधिरः रथिरः वप्रकरणेः
केभ्योऽपि दृश्यत इति वक्तव्यम् २ इत्यपरस्य विम्बावम् कुररारम् अन्येषामपि दृश्यत इति दीर्घः ॥
गाण्ड्यजगात्संज्ञायाम् ५।२।११० गाण्डी अजगा इत्येताभ्यां मत्वर्थे संज्ञायां वः स्यात् गाण्डीवं धनुः
ह्रस्वान्तादपि गाण्डिवः अजगवं पिनाकः इत्यादि स्वत्वयं भाष्ये न व्याख्यातम् ॥ काण्डा
ण्डादीरन्नीरचौ ५।२।१११ काण्ड आण्ड इत्येताभ्यां मत्वर्थे क्रमेणेरन् ईरच् इत्येतौ प्रत्ययौ भवतः
काण्डीरः काण्डवान् आण्डीरः आण्डवान् ॥ रजः कृष्यासुतिपरिषदो वलच् ५।२।११२
रजस् कृषि आसुति परिषद् इत्येतेभ्यो मत्वर्थे वलच् स्यात् रजस्वला स्त्री कृषीवलः कुटुम्बी आ
सुतीवलः शौण्डिकः वले इति दीर्घः परिषद्वलो राजा पर्षदिति पाठान्तरम् पर्षद्वलः रलच् मक
रणे अन्येभ्योऽपि दृश्यते २ अन्येभ्योऽपि दृश्यते २ भ्रातृवलः पुत्रवलः उत्साहवलः उत्संगवलः ।
॥ दन्तशिखात्संज्ञायाम् ५।२।११३ दन्त शिखा इत्येताभ्यां मत्वर्थे संज्ञायां वलच् स्यात् दन्तावलो ग

राम
२२८

नः शिखावलः केकी वलच् इति दीर्घः इत्यादिसूत्रद्वयं भाष्ये प्रत्याख्यातम् ॥ ज्योत्स्नातमिस्राशृङ्गिणोर्ज-
स्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ५।२।११४ ज्योत्स्ना तमिस्रा शृङ्गिण ऊर्जस्विन् ऊर्ज-
स्वल गोमिन् मलिन मलीमस इत्येते मत्वर्थे संज्ञायां निपात्यन्ते ज्योतिस् उपधालोपः नप्रत्ययः
ज्योत्स्ना चन्द्रप्रभा तमस् उपधाया इत्वम् रप्रत्ययः तमिस्रा रात्रिः तमिस्रं तमः शृङ्ग इनच् शृङ्गि-
णः ऊर्जस् विनिवलच्प्रत्ययौ ऊर्जस्वी ऊर्जस्वलः गो मिन् गोमी मल इनच् मलिनः मल ईमस-
च् मलीमसः ॥ अत इनिठनौ ५।२।११५ अ इत्येतदन्तान्मत्वर्थे इनि ठन् इत्येतौ प्रत्ययौ वा भवतः
दण्डी दण्डिकः दण्डवान् तपरकरणं किम् मालावान् इनिठनोरेकाक्षरात् प्रतिषेधः १ एकाक्षरात्कृ-
तो जातेः सप्तम्यां च न तौ स्मृतौ २ एकाक्षरात् स्ववान् कृतः कारकवान् जातेः व्याघ्रवान् सप्तम्या-
म् दण्डा अस्यां सन्ति दण्डवती शाला यदि कृतो नेत्यनेन वचनेन कार्यी कार्यिकः इति न सिध्यति तथा जाते-
र्नेत्यनेन तण्डुली तण्डुलिकः इति न सिध्यति इति भाष्यम् ॥ व्रीह्यादिभ्यश्च ५।२।११६ व्रीहि इत्येवमा-

स॰कौ
३२९
329

दिभ्योमत्वर्थेइनिठनौवाभवतः व्रीही व्रीहिकः व्रीहिमान् व्रीहि मया शाला शिखा माला मेख॰
ला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा बला॰
का यवखद नौ कुमारी शीर्षान्नञः व्रीह्यादिः शिखादिभ्यइनिर्वाच्यः १ शिखामालासंज्ञादिभ्य
इनिः १ इकन्यवखदादिषु २ इखवखदादिभ्यइकः २ अन्येभ्यउभयम् ३॥ तुन्दादिभ्यइलच्च ५।२।
११७ तुन्द इत्येवमादिभ्योमत्वर्थेइलच्स्यात् चकारादिनिठनौ तुन्दिलः तुन्दी उदर पिचण्ड यव
व्रीहि स्वाङ्गाद्विवृद्धौ तुन्दादिः भाष्येतुनेदंव्याख्यातम्॥ एकगोपूर्वाट्ठञ्नित्यम् ५।२।११८ एक
गो इत्येवंपूर्वात्प्रातिपदिकान्मत्वर्थेनित्यंठञ्स्यात् ऐकशतिकः कस्मान्नभवतिगोविंशतिरस्या॰
स्तीतिअनभिधानात् इतिभाष्यम्॥ शतसहस्रान्ताच्चनिष्कात् ५।२।११९ शत सहस्र इत्येतदन्ता॰
न्निष्कइत्येतस्मात्प्रातिपदिकान्मत्वर्थेठञ्स्यात् नैष्कशतिकः नैष्कसहस्रिकः भाष्येतुनेदंव्याख्यात
म्॥ रूपादाहतप्रशंसयोर्यप् ५।२।१२० रूप इत्येतस्मादाहतप्रशंसयोर्वर्तमानान्मत्वर्थेयप्स्यात् आ

राम
३२९

इदं रूपमस्यास्ति रूप्यः कार्षापणः यथा स्तं रूपमस्यास्ति रूप्योगौः आहतप्रशंसयोः किम् रूपश
न् यप्यकरणाश्चभ्योऽपिदृश्यते १ हिम्याः पर्वताः गुण्यः ब्राह्मणाः अन्येभ्योऽपिदृश्यते १ ॥
अस्मायामेधास्रजोविनिः ५।२।१२१ अस् इत्येतदन्तात् माया मेधा स्रज् इत्येतेभ्यश्च मत्वर्थे वि
निर्वास्यात् असन्तात् यशस्वी यशस्वान् मायावी मायावान् मेधावी मेधावान् स्रग्वी स्रग्वा
न् भाष्यमनुनेदंव्याख्यातम् ॥ बहुलंछन्दसि ५।२।१२२ वेदेमत्वर्थेबहुलंविनिः स्यात् अग्रेतेजस्वि
न् सवमस्ति इत्येरावर्चस्वान् छन्दोविन्यकरणाश्चाष्ट्रामेखलाद्वयोभयरुजाहृदयानांदीर्घश्च १
आष्ट्रा आष्ट्रावी मेखला मेखलावी द्वय द्वयावी उभय उभयावी रुजा रुजावी हृदय हृदयावी
मर्मणाश्चेतिवक्तव्यम् २ मर्मावी सर्वत्रामयस्य १ अन्यसिलोकेच आमयावी आमयस्योपसं
ख्यानंदीर्घश्च १ शृङ्ग वृन्दाभ्यामारकन् ४ शृङ्गारकः वृन्दारकः फलबर्हाभ्यामिनच् ५ फलिनः
बर्हिणः हृदयाच्चालुरन्यतरस्याम् ६ हृदयालुः हृदयी हृदयिकः हृदयवान् शीतोष्णतृप्रेभ्यस्तन्नस

मू॰कौ
३३०
330

सहते ७ शीतंनसहते शीतालुः उष्णालुः तृप्रालुः शीतोस्सतस्मेभ्यस्त्वसहने २ हिमाच्चेलुः ८ हि
मंनसहते हिमेलुः बलाद्बोलः ९ बलंनसहते बलूलः बलाहूलः ३ वातात्समूहेच १० वातानांस
मूहः वातूलः वातंनसहते वातूलः पर्वमरुद्भ्यांतप् ११ पर्वतः मरुत्तः तप्पर्वमरुद्भ्याम् ४ दत्ता
नितरंतंवा) १२ ऊर्णायायुस् ५।२। १२३ ऊर्णा इत्येतस्मात्मत्वर्थेयुस् स्यात् ऊर्णायुः इत्यादिसूत्रद्वयं
भाष्येननव्याख्यातम् ॥ वाचोग्मिनिः ५।२।१२४ वाच् इत्येतस्मात्मत्वर्थे ग्मिनिः स्यात् स्वाग्मी वा
ग्मिनौ ॥ आलजाटचौबहुभाषिणि ५।२। १२५ वाच् इत्येतस्मात् बहुभाषिणिवाच्येमत्वर्थेआलच्
इत्येतौप्रत्ययौभवतः वाचालः वाचाटः कुत्सितइतिवक्तव्यम् १ योहिसम्यग्बहुभाषते सवाग्मी
॥ स्वामिन्नैश्वर्ये ५।२। १२६ स्वामिन् इत्येतदैश्वर्येआमिनच्प्रत्ययान्तंनिपात्यते स्वमैश्वर्ये
किम् स्ववान् नायंप्रत्ययार्थः किन्तर्हिप्रकृतिविशेषणमेतत् ॥ इतिभाष्यम् ॥ ५९ ॥
॥ ५५ ॥ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ ५०।

राम
३३०

अर्शआदिभ्योऽच् ५।२।१२७ अर्शस् इत्येवमादिभ्यो मत्वर्थेऽच् स्यात् अर्शांसि विद्यन्तेऽस्य अर्शसः अ
र्शस् उरस् तुन्द चतुर पलित जटा घटा घाटा अभ्र कर्दम अम्ल लवण स्वाङ्गाद्धीनात् वर्णात्
अर्शआदिराकृतिगणः इत्यादिसूत्रद्वयं भाष्ये तु न व्याख्यातम् ॥ द्वन्द्वोपतापगर्ह्यात्प्राणिस्था
दिनिः ५।२।१२८ द्वन्द्वसमासात् उपतापवाचिनः गर्ह्यवाचिनश्च प्राणिस्थार्थवाचिनो मत्वर्थे इनिः
स्यात् द्वन्द्व कटकवलयिनी शंखनुपुरिणी उपताप कुष्ठी किलासी गर्ह्यात् ककुदावर्ती काक
तालुकी प्राणिस्थात्किम् पुष्पफलवान्वृक्षः प्राण्यङ्गान्न भवति पाणिपादवती अत इत्येव ने
ह चित्र कललिकावती पुनर्वचनं ठनादिबाधनार्थम् ॥ वातातीसाराभ्यां कुक् च ५।२।१२९ वा
त अतीसार इत्येताभ्यां मत्वर्थे इनिः स्यात् तत्संनियोगेन तयोः कुगागमश्च वातकी अतीसार
की रोग एवायम् नेह वातवती गुहा पिशाचाच्च १ पिशाचकी ॥ वयसि पूरणात् ५।२।१३० पू
रणप्रत्ययान्तान्मत्वर्थे वयसि गम्यमाने इनिः स्यात् पञ्चमो मासोऽस्यास्ति पञ्चमी उष्ट्रः वयसि किम् पञ्च

सि-कौ
२३१
331

सर्वान्समरागाः इत्यादि सूत्रपञ्चकं भाष्येनव्याख्यातम् ॥ सुखादिभ्यश्च ५।२।१३१ सुख इत्ये
वमादिभ्यो मत्वर्थे इनिः स्यात् सुखी दुःखी सुख दुःख तृप्र कृच्छ्र आस्र अस्र अलीक करुणा
सोढ प्रतीप शील हल माला क्षेप कृपण प्रणाय दल कक्ष सुखादिः ॥ धर्मशीलवर्णा
५।२।१३२ धर्म शील वर्ण इत्येतदन्तान्मत्वर्थे इनिः स्यात् ब्राह्मणधर्मी ब्राह्मणशीली ब्राह्मण
वर्णी ॥ हस्ताज्जातौ ५।२।१३३ हस्त इत्येतस्मान्मत्वर्थे समुदायेन जात्यभिधाने इनिः स्यात् हस्ती
हस्तिनौ जातौ किम् हस्तवान् पुरुषः ॥ वर्णाद्ब्रह्मचारिणि ५।२।१३४ वर्ण इत्येतस्मान्मत्वर्थे
इनिः स्यात् x पुष्करिणी पद्मिनी देशे किम् पुष्करवान् हस्ती पुष्कर पद्म उत्पल तमाल कुमुद नड
कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास प्रवाह हिरण्य कैरव कल्लो
ल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल पयस्
पुष्करादिः इति मत्वर्थीयप्रकरणे बलाहारूरुएकंपदाङ्गसंख्यानम् १ वाहरूरुएकंपदाद्दलात् १ वाऊरुबली ऊ

x वर्णी। वर्णिनौ। वर्णिनः॥ ब्रह्मचारिणि किम्॥ वर्णवान्॥ पुष्करादिभ्यो देशे॥ ५।२।१३५ पुष्कर इत्येवमादिभ्यो देशे वाऽर्थे इनिः स्यात् १

तस्यप्राग्दिशीयेपरेइशइत्येषआदेशःस्यात् इतः इद् आकारः सर्वादेशार्थः इत्यादिरिह अदयं भाष्येत्तनव्या
ख्यातम् ॥ एतेतौरथोः ५।३।४ काशि इदम् इत्येतस्य र थ् इत्येतदादौप्राग्दिशीयेपरे क्रमेणएत इ
त् इत्येतावादेशौभवतः एतर्हि। इत्थम् थादेतोचछन्दसि १ इतिकाशिका इदम् त्थमा ॥ एतदो
न् ५।३।५ एतद् इत्येतस्यप्राग्दिशीयेपरेऽन्इत्येषआदेशःस्यात् अतः अत्र एतदोऽश् इत्येषसूत्रपा
ठः शाकिकायाम् आनसर्वाास्तिस्तिद्धमेतत् अनेकाल्त्वात्समित्यर्थः मस्त्रिरानिर्देशोऽयम् अत्र इ
ति इतिभाष्यम् एतद् इति योगविभागः २ एतद्इत्येतस्यएतइत इत्येतावादेशौभवतोरेफे एतर्हि इ
त्थम् इत्या ततः अन् एतदस्त्रथमउपसंख्यानम् २ थमुप्रत्ययः प्रनरेतदुपसंख्येयः २ इतिकाशि
का ॥ सर्वस्यसोऽन्यतरस्यांदि ५।३।६ काशि सर्व इत्येतस्यदइत्येतदादौप्राग्दिशीयेपरे सइत्येषआ
देशोवास्यात् सदा-सर्वदा प्राग्दिशीयेकिम् सर्वदाब्राह्मणी भाष्येत्वनेदंव्याख्यातम् ॥ पञ्च्या
म्यास्तसिल् ५।३।७ काशि पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्योऽद्यादिभ्यः स्वार्थेतसिल्स्यात् कस्मात्

कुतः यतः ततः बहुतः तसिलादेयो विभक्त्यादेशाश्चेत्तु लुक् स्वरगुणदीर्घत्वानि तस्मादादिविधिप्रतिषे
धः । यदि परे समानशब्दप्रतिषेधः २ अनादेशो स्वार्थो विज्ञानात्समानशब्दाप्रतिषेधः इति भाष्यम् ॥४

सू-कौ ३२२

तसेश्च ५।३।८ [illegible] तसि इत्येतस्य पञ्चम्यास्तस्यमर्थस्य किंसर्वनाम बहुभ्यो द्व्यादिभ्यः परा
स्य तसिल् इत्ययमादेशः स्यात् कुतस्यागतः ततस्यागतः बहुतस्यागतः तसेस्तसिल्वचनं स्वरार्थम्
२ ॥ पर्यभिभ्यां च ५।३।९ [illegible] परि अभि इत्येताभ्यां स्वार्थे तसिल् स्यात् परितः सर्वतः इत्यर्थः
अभितः उभयत इत्यर्थः पर्यभिभ्यां च सर्वोभयार्थाभ्याम् । सर्वोभयार्थाभ्यामेव । [illegible] ३॥ स
प्तम्यास्त्रल् ५।३।१० [illegible] सप्तम्यन्तेभ्यः किंसर्वनामबहुभ्यो द्व्यादिभ्यः स्वार्थे त्रल् स्यात् कस्मिन् कु
त्र यत्र तत्र बहुत्र इत्यादि [illegible] एवं भाष्ये तु न व्याख्यातम् ॥ इदमो हः ५।३।११ [illegible] इदम् इत्ये
तस्मात्सप्तम्यन्तात्स्वार्थे हः स्यात् इह ॥ किमोऽत् ५।३।१२ [illegible] किम् इत्येतस्मात्सप्तम्यन्तात्स्वा
र्थे अत् स्यात् [illegible] वा क्व ॥ वा ह च छन्दसि ५।३।१३ किम् इत्येतस्मात्सप्तम्यन्तादेदे स्वार्थे वा

राम ३३३

रूपवती सर्वादेश्च २ सर्वधनी सर्ववीजी सर्वकेशी अर्थाच्चासन्निहिते २ अर्थी असन्निहिते किम् अ
र्थवान् तदन्ताच्च ४ धान्यार्थी हिरण्यार्थी ॥ वलादिभ्यो मतुबन्यतरस्याम् ५।२।१३६ वल इत्ये
वमादिभ्यो मत्वर्थे वा मतुप् स्यात् पक्षे इनिः वलवान् वली वल उत्साह उद्भास उद्वास उद्धास शिखा
कुल चूडा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध वलादिः इत्यादि
सूत्रपञ्चकं भाष्येनुपाख्यातम् ॥ संज्ञायां मन्माभ्याम् ५।२।१३७ मन् म इत्येतदन्ताभ्यां प्राति
पदिकाभ्यां संज्ञायां मत्वर्थे इनिः स्यात् मन् प्रथिमिनी दामिनी म होमिनी सोमिनी संज्ञायां किम्
सामवान् सोमवान् ॥ कंशंभ्यां वभयुस्तितुतयसः ५।२।१३८ कम् शम् इत्येताभ्यां मत्वर्थे व भ
युस् ति तु त यस् इत्येते प्रत्यया भवन्ति कंवः शंवः कंभः शंभः कंयुः शंयुः कंतिः शं
तिः कंतुः शंतुः कंतः शंतः कंयः शंयः सकारः पदसंज्ञार्थः तेनानुस्वारपरसवर्णौ भवतः ॥
तुन्दिवलिवटेर्भः ५।२।१३९ तुन्दि वलि वटि इत्येभ्यो मत्वर्थे भः स्यात् तुन्दिभः वलिभः वटिभः तु

स्न्कौ 
३३३

गोरिति माधवः ॥ अहंशुभमोः ५।२।१४० अहम् शुभम् इत्येताभ्यां मत्वर्थे युस् स्यात् अहंयुः अहंकारवान् शुभंयुः शुभान्वितः ॥ इति षष्ठः स्वयाणिभाषे ५।२।१२ व्याख्यातानि ॥ ॥ प्राग्दिशोविभक्तिः ५।३।१ संज्ञाप्रदेशाः ४।२।१२।१ दिक्शब्देभ्यइत्यतः प्रागवक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञका भवन्ति वक्ष्यति पञ्चम्यास्तसिल् यतः ततः कुतः अतः परं स्वार्थिकाः प्रत्ययास्तत्र समर्थानां प्रथमादिति च निवृत्तम् वा ग्रहणमनुवर्त्तत एव विभक्तित्वे प्रयोजनमित्यति षेधः १ इदमो विभक्तिस्वरश्च २ त्यदादिविधयश्च ३ ॥ किंसर्वनामवहुभ्योऽद्व्यादिभ्यः ५।३।२ किम् इत्येतस्मात् सर्वनामसंज्ञकात् वहु इत्येतस्माच्च प्राग्दिशीयाः प्रत्यया भवेदितव्यः वक्ष्यति पञ्चम्यास्तसिल् इत्यादि किम् कुतः कुत्र सर्वनाम यतः यत्र ततः तत्र वहु वहुतः वहुत्र द्व्यादिः सर्वाघनवर्गाणाः अद्व्यादिभ्यः किम् द्वाभ्याम् द्वयोः प्रकृतिपरिसंख्यानं किम् हलात् द्वदे। प्राग्दिशः किम् वैयाकरणपाशः द्व्यादिप्रतिषेधात्किमः उपसंख्यानम् २ ॥ इदमइश् ५।३।३ इदम् शब्द

साम
३३२

१ वहुत्व ग्रहणे संख्या ग्रहणम् ॥१॥

५१ एतदस्त्रतसोस्त्रतसो चानुदात्तौ ॥२।४।३३॥ एतद् इत्येतस्य अन्वादेशविषयेऽनुदात्तोऽशादेशः स्यात्त्रतसोः परतः॥ त्र। तस् इत्येतौ चानु दात्तौ भवतः॥ एतस्मिन्ग्रामे सुखं वसामः। अथो अ[illegible] अधीमहे॥ एतस्माच्छन्दोधीष्व। अथो अतोव्याकरणमप्यधीष्व॥ एतदो शि ष्वेनैव [illegible] अशादेशोसिद्धे पुनर्वचनं सर्वानुदात्तत्वाय॥

दः स्यात् कुतस्त्यः कुत्रादिनसहूरे ॥१४ पूतराभ्योः पित्दुपले ५।३।१४ [illegible] पञ्चमीसप्तमीतरवि। भक्तान्तेभ्योः पितसिलादयोदृश्यन्ते सभवान् ततोभवान् तत्रभवान् तंभवन्तम् ततोभवन्तम् तत्र भवन्तम् इत्यादि भवदादितिसिद्धयोगे १ भवान् दीर्घायुः देवानांप्रियः आयुष्मान् भवदादिः॥ सर्वैकान्यकिंयत्तदः कालेदाः ५।३।१५ [illegible] सर्व एक अन्य किम् यद् तद् इत्येतेभ्यः कालेव र्तमानेभ्यः सप्तम्यन्तेभ्य स्वार्थेदा स्यात् सर्वस्मिन्काले सदा सर्वदा एकदा अन्यदा कदा यदा तदा कालेकिम् सर्वत्रदेशे इत्यादिसूत्रद्वयंभाष्येतुनव्याख्यातम् ॥ इदमोर्हिल् ५।३।१६ [illegible] इ दम् इत्येतस्मात्कालेवर्तमानात्सप्तम्यन्तात्स्वार्थेर्हिल् स्यात् अस्मिन्काले एतर्हि कालेकिम् इहदेशे भाष्येतुनेदंआख्यातम् ॥ अधुना ५।३।१७ [illegible] अधुना इत्येतन्निपात्यते अस्मिन्का ले अधुना इदमोऽश्भावोधुनाचप्रत्ययः १ इदमोवालोपः अधुनाचप्रत्ययः २ दानींच ५।३।१८ [illegible] इदम् इत्येतस्मात्कालेवर्तमानात्सप्तम्यन्तात्स्वार्थेदानीम्स्यात् अस्मिन्काले इदानीम् नि

सु.कौ.

२२४

334

पादनात्स्वार्थसिद्धिः । अस्तु दानीमनव्ययस्येति भावः ॥ तदो दा च ५।३।१९ [blacked out] तद् इत्येतस्मात्कालेव-
र्तमानात्स्वार्थे दाः स्यात् चकाराद्दानीम् तस्मिन्काले तदा तदानीम् तदो दा च चेनमनर्थकं विहित-
त्वात् । [blacked out]: ॥ (तयोर्दार्हिलौ च छन्दसि ५।३।२० इदम् तद् इत्येताभ्यां सप्तम्यन्ताभ्यां यथाक्रमं
वेदे दा र्हिल इत्येतौ प्रत्ययौ भवतः चकाराद्यथाप्राप्तम् इदावत्सरीयम् तर्हीदानीमविकल्पयत् अथा
तदानीम् तयोरिति प्रातिपदिकनिर्देशः)१॥ अनद्यतने र्हिलन्यतरस्याम् ५।३।२१ [blacked out] किंसर्व-
नामबहुभ्यः सप्तम्यन्तेभ्यो ऽनद्यतने काले र्हिल् वा स्यात् कर्हि कदा यर्हि यदा तर्हि तदा भाष्ये तु नेदं व्या-
ख्यातम् ॥ सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरे-
द्युः ५।३।२२ [blacked out] सद्यः परुत् परारि ऐषमः परेद्यवि अद्य पूर्वेद्युः अन्येद्युः अन्यतरेद्युः इतरेद्युः
अपरेद्युः अधरेद्युः उत्तरेद्युः इत्येते निपात्यन्ते समानेऽहनि सद्यः पूर्वस्मिन्वत्सरे परुत् पूर्वतरे वत्सरे
परारि अस्मिन्संवत्सरे ऐषमः परस्मिन्नहनि परेद्यविः अस्मिन्नहनि अद्य पूर्वस्मिन्नहनि पूर्वेद्युः अन्ये

तप

११४

शुः अन्यतरेद्युः इतरेद्युः अपरेद्युः अधरेद्युः उभयेद्युः उत्तरेद्युः समानस्य सभावो द्यस् चाहनि १ [illegible]

[illegible] पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे २ इदमः समसण् ३ संवत्सर इत्येव इदमः इश् समसण्

मत्वयस्य संवत्सरे १ [illegible] परस्माद् एद्यव्यहनि ४ [illegible] इदमो ऽश् भावो द्यस् ५ [illegible] अहनीत्येव

पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस च ६ अहनीत्येव पूर्वादिभ्यः अष्टभ्यः एद्युस् २ [illegible]

[illegible]द्युश्चोभयात् ७ [illegible] अहनीत्येव उभयद्युः ॥ प्रकारवचने थाल् ५।३।२३ [illegible] किंसर्वनाम

बहुभ्यो द्व्यादिभिः त्यतीन्तेभ्यः प्रकारे थाल् स्यात् सर्वैः प्रकारैः सर्वथा बहुथा इत्यादि द्वच नतु ...

थे तु न व्याख्यातम् ॥ इदमस्थमुः ५।३।२४ [illegible] इदम् इत्येतस्मात् प्रकारे थमुः स्यात् अनेन प्रका

रेण इत्थम् एतदो वाच्यः १ [illegible] इत्थम् ॥ किमश्च ५।३।२५ [illegible] किम् इत्येतस्मात् प्रकारे

थमु प्रत्ययः स्यात् केन प्रकारेण कथम् ॥ (था हेतौ च छन्दसि ५।३।२६ किम् इत्येतस्मात् हेतौ प्रकारे

च वेदे था स्यात् हेतौ कथा ग्रामं न पृच्छसि केन हेतुनेत्यर्थः प्रकारे कथा देवा आसन्) ॥ X दिक्शब्देभ्यः

इति श्रीवरदराजबालसूत्लविरचितायां शब्दसिद्धान्तसूत्रकौमुद्यां प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः ॥

५४ पूर्वापराधराणामसि पुरधवश्चैषां ॥ ५।३।३९ ॥ पूर्व अधर अवर इत्येतेभ्यः स्वार्थे असिः स्यात् । तत्संनियोगेन चैषां [illegible] यथाक्रमेण पुर् अध् अव् इत्येते आदेशा भवन्ति । पुरः । अधः । अवः । वसति आगतो रमणीयं वा ॥ अस्ताति च ॥ ५।३।४० ॥ पूर्व अधर अवर इत्येतेभ्यः स्वार्थे अस्तातिः स्यात् । तत्संनियोगेन चैषां पुरादय आदेशा भवन्ति । पुरस्तात् । अधरस्तात् । अवरस्तात् । वसति आगतो रमणीयं वा ॥ विभाषावरस्य ॥ ५।३।४१ ॥ अवर [illegible] इत्येतस्मात् अस्ताति [illegible] योगे अस्य पूर्वादेशो वा स्यात् । अवस्तात् । अवरस्तात् ॥ वसति आगतो रमणीयं वा ॥ ५ X

इ. कौ

२३५

335

सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ५।३।२७ दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यः स्वार्थे अस्तातिः स्यात् अधः अधस्ताद्वसति अधः अधस्तादागतः अधः अधस्ताद्रमणीयम् दिक्शब्देभ्यः किम् ऐन्द्र्यां दिशि वसतीति सप्तमीत्यादि किम् पूर्वं ग्रामं गतः दिग्देशकालेषु किम् पूर्वस्मिन्गुरौ वसति इह कस्मान्न भवति पूर्वास्मिन्देशे वसतीति नैष देशः देशविशेषणमेतत् इति भाष्यम् यो दिग्देशेन विशेष्यमाणो देशो भवति ततः प्रत्ययो न विशेषणाद् इत्यर्थः इति कैयटः ॥ X

दक्षिणोत्तराभ्यामतसुच् ५।३।२८ [illegible] दक्षिण उत्तर इत्येताभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां दिग्देशकालवृत्तिभ्यां स्वार्थे अतसुच् स्यात् दक्षिणतो वसति दक्षिणत आगतः दक्षिणा शब्दस्य कालवृत्तित्वं न संभवति उत्तरतो वसति उत्तरत आगतः उत्तरतो रमणीयम् चकारो विशेषणार्थः षष्ठ्यतसर्थप्रत्ययेनेति ॥ विभाषा परावराभ्यां ५।३।२९ [illegible] पर अवर इत्येताभ्यां वा अतसुच् स्यात् परतः परस्तात् वसति आगतो रमणीयं वा अवरतः अवरस्तात् वसति आगतो रमणीयं वा इत्यादि [illegible] भाष्ये तु न व्याख्यातम् ॥

इ म

२३५

अस्तेर्लुक् ५।३।३० अस्त इत्येतदन्तेभ्यो दिग्देशकालेभ्यः परस्यास्तातिप्रत्ययस्य लुक् स्यात् प्राग्वचे सति
प्रागागतः प्राग्रमणीयम् एवं प्रत्यक् ॥ उपर्युपरिष्टात् ५।३।३१ [illegible] उपरि उपरिष्टात् इत्येताव
स्तोरर्थे निपात्येते उपरि उपरिष्टात् वसति आगतो रमणीयं वा ऊर्ध्वस्य आगतो रमणीयं वा ऊर्ध्वस्य उपभावो
रिलरिष्टातिलौ च १ ॥ पश्चात् ५।३।३२ [illegible] पश्चात् इत्येतदस्तातेरर्थे निपात्यते पश्चात् वसति आ
गतो रमणीयं वा अपरस्य पश्चभावश्चातिश्च प्रत्ययः १ दिक्पूर्वपदस्य च २ दक्षिणपश्चात् दिक्पूर्वप
दस्य वा अपरशब्दस्य पश्चभावो वक्तव्यः २ इति काशिका अर्द्धोत्तरपदस्य च समासे २ दक्षिणपश्चार्द्धः उत्त
रपश्चार्द्धः अर्द्धोत्तरपदस्य च दिक्पूर्वपदस्य पश्चभावो वक्तव्यः २ इति काशिका अर्द्धे च ४ अपरस्यास्ता
र्द्धस्य पश्चार्द्धः अपरस्यार्द्धे पश्चभावो वक्तव्यः १ अर्द्धे च विनापि दिक्पूर्वपदेन पश्चभावो वक्तव्यः २ इति काशि
का ॥ उत्तराधरदक्षिणादातिः ५।३।३४ [illegible] उत्तर अधर दक्षिण इत्येतेभ्यः स्वार्थे आतिः स्यात् उत्तरा
त् अधरात् दक्षिणात् वसति आगतो रमणीयं वा ॥ एनबन्यतरस्यामदूरेऽपञ्चम्याः ५।३।३५ [illegible]

इ.को
३३६
330

ञ्च

... उत्तर अधर दक्षिण इत्येतेभ्यः स्वार्थे आतिप्रत्ययः स्यात् अहेरेश्चेद्वर्तमानवत्येर्वर्तते पञ्चम्यन्तात्तु न भव
ति उत्तरेण उत्तरात् उत्तरतः अधरेण अधरात् अधरतः दक्षिणेन दक्षिणात् दक्षिणतः वसति
रमणीयं वा अहेरे किम् उत्तराद्वसति अपञ्चम्याः किम् उत्तराद्गमनः केचिदिदेनां दिग्देशेनानु
वर्तन्ते इति विकल्पमानात्ययं विदधते पूर्वेण ग्रामम् अपरेण ग्रामम् अपञ्चम्या इति प्रामसेः १ ॥
दक्षिणादाच् पा५।३।३६ ... दक्षिण इत्येतस्मात्स्वार्थे आच् स्यात् दक्षिणा वसति रमणीयं वा अपञ्च
म्या इत्येव दक्षिणादागतः चकारो विशेषणार्थः अञ्चूत्तरपदान्ताद्दिक्शब्दे इति ॥ आहि च दूरे पा५।३।३७
... दक्षिण इत्येतस्मात्स्वार्थे आहिः स्यात् दूरे चेद्वर्तमान आच्चकारात् दक्षिणाहि दक्षिणा वस
ति रमणीयं वा दूरे किम् दक्षिणेन वसति अपञ्चम्या इत्येव दक्षिणत आगतः इत्यादिस्त्वपञ्चकमा
योगेनव्याख्यातम् ॥ उत्तराच्च पा५।३।३८ ... उत्तर इत्येतस्मात्स्वार्थे आच् आहि इत्येतौ प्रत्ययौ भवतः
उत्तरा उत्तराहि वसति रमणीयं वा दूरे इत्येव उत्तरेण वसति अपञ्चम्या इत्येव उत्तरत आगतः ॥ संख्या

राम
३३८

X२ अधिकरणविचाले च ॥५।३।४३॥ द्रव्यस्य संख्यान्तरापादने गम्यमाने संख्यावाचिनः स्वार्थे धा स्यात् ॥ एकं राशिं पञ्चधा कुरु ॥ अनेकं राशिमेकधा कुरु ॥ सप्तधा ॥ अष्टधा ॥ भाष्ये तु नेदं व्याख्यानम् ॥२X

याविधार्थे धा ५।३।४२ संख्यावाचिभ्यः क्रियाप्रकारे वर्तमानेभ्यः स्वार्थे धा स्यात् एकधा द्विधा वा भु-
ङ्क्ते धाविधाने यावत्सर्वथ इष्टग्राभावइति वक्तव्यम् १ एकाद्धो ध्यमुञन्यतरस्याम् ५।३।४४
एक इत्येतस्मात्परस्य धा इत्येतस्य ध्यमुञ् इत्ययमादेशो वा स्यात् ऐकध्यम् एकधा वा राशिं कुरु ऐकध्य-
म् एकधा वा भुङ्क्ते ध्यमुञो ग्रहणं धामात्रस्यादेशार्थम् ॥ सद्भावे ध्यमुञ् १ न वक्तव्यः अधिकरणवि-
चाल इत्युच्यते न चावश्यं स एवाधिकरणविचालः यदेकमनेकं क्रियते यदप्यनेकमेकं क्रियते सोऽपि अधि-
करणविचालः इति भाष्यम् ॥ द्वित्र्योश्च धमुञ् ५।३।४५ द्वि त्रि इत्येताभ्यां परस्य धा इत्येत-
स्य धमुञ् इत्ययमादेशो वा स्यात् द्वैधम् द्विधा त्रैधम् त्रिधा धमुञन्तात्स्वार्थे डदर्शनम् १ द्वै-
धानि त्रैधानि तृणानि ॥ एधाच्च ५।३।४६ द्वि त्रि इत्येताभ्यां परस्य धा इत्येतस्य एधाच् इ-
त्ययमादेशो वा स्यात् द्वेधा द्विधा त्रेधा त्रिधा विकल्पानुवृत्तिसामर्थ्यप्रकारः भाष्ये त्वनेदं व्याख्यातम् ॥
याप्ये पाशप् ५।३।४७ कुत्सितेऽर्थे वर्तमानात्प्रथमान्तात्स्वार्थे पाशप्स्यात् याप्यो वैयाकरणः वैया-

करणेवाशपिकांसितग्रहणम्॥१॥ पूरणाद्भागेतीयादन्।५।३।४८ [illegible] पूरणार्थतीयप्रत्यया
न्ताद्भागेवर्तमानात्स्वार्थेऽन्स्यात् द्वितीयः तृतीयो [illegible] भागोकिम् द्वितीयस्य पूरणादित्युत्तरार्थ
म् अन्वियानेस्वरार्थम्॥ प्रागेकादशभ्योऽछन्दसि ५।३।४९ [illegible] प्रागेकादशभ्यः संख्याशब्देभ्यः
पूरणप्रत्ययान्तेभ्यो भागेवर्तमानेभ्योऽछन्दसिअन्स्यात् चतुर्थः पञ्चमः दशमः प्रागेकादशभ्यः कि
म् एकादशः द्वादशः अछन्दसिकिम् पञ्चममिन्द्रियमस्यापाक्रामत् स्वार्थेवचनम् इत्यादिसूत्रत्र
यंभाष्येप्रत्याख्यातम्॥ षष्ठाष्टमाभ्यांञच ५।३।५० [illegible] षष्ठ अष्टम इत्येताभ्यांभागेऽछन्दसिञः
स्यात् अनपिचकारात् षाष्ठः षष्ठः आष्टमः अष्टमः॥ मानपश्वङ्गयोःकन्लुकौच ५।३।५१
[illegible] षष्ठ अष्टम इत्येताभ्यांमानपश्वङ्गयोर्वाच्ययोर्यथाक्रमंकन्लुकौभवतः षष्ठकोभागःमाने
चेत् अष्टमोभागःपश्वङ्गंचेत् अस्यअनोवालुक् चकाराद्यथाप्राप्तम् षाष्ठः षष्ठः आष्टमः अष्टमः
मानपश्वङ्गयोःकिम् षाष्ठः आष्टमः॥ एकादाकिनिच्चासहाये ५।३।५२ [illegible] एक इत्येतस्माद्

असहायवाचिनः स्वार्थे आकिनच् स्यात् चकारात्कन्लुकौ च एकाकी एकाकिनौ एकाकिनः एक
कः एकः एकादाकिनिविदिवद्व्यर्थे प्रत्ययविधानम् १ संख्यावाचित्वेनिमित्तेनतत् सिद्धन्तु संख्यादेश
वचनात् २ असहायसंवा ३ एकः अन्येष्वादेशः ॥ भूतपूर्वे चरट् ५।३।५३ [illegible] भूतपूर्वेऽर्थे वर्त
मानात्प्रातिपदिकात्स्वार्थे चरट् स्यात् अयो भूतपूर्वः आढ्यचरः आढ्यचरी २ स्मादित्त्वं चद्यभाष्ये
तु न व्याख्यातम् ॥ षष्ठ्या रूप्य च ५।३।५४ [illegible] षष्ठ्यन्तात् भूतपूर्वे रूप्यः स्यात् चकाराच्चरट् च
देवदत्तस्य भूतपूर्वः देवदत्तरूप्यो गौः देवदत्तचरः यज्ञदत्तरूप्यः यज्ञदत्तचरः ॥ इति ५४ सूत्राणि
भाष्ये ५।२।१ व्याख्यातानि ॥ अतिशायने तमबिष्ठनौ ५।३।५५ [illegible] अतिशयविशिष्टेऽर्थे
वर्तमानात् आत्मयमानात् स्वार्थे तमप् इष्ठन् इत्येतौ प्रत्ययौ भवतः अयमेषामतिशयेन पटुः पटुतमः प
टिष्ठः लघुतमः लघिष्ठः गुणग्रहणं कर्तव्यम् १ द्रव्यप्रकर्षे मा भूत् क्रियमाणे चापि गुणग्रहणे समान
गुणग्रहणं कर्तव्यम् २ शुक्लात्कृष्णे मा भूत् अन्यानां कारणानां मध्ये निकाणि सर्वे सोऽस्य वर्तते सर्वे इमे

मा

म० को०
२३८
338

किञ्चित्पश्यन्निग्रयमेधाकालेन नमश्रुति इति भाष्यम् अप्रहृरविप्रकर्षे २ सर्वयान्नादीयान्त्रदिमवानिति
मासेनेत जातेन ४ रूदमासेन हतोऽयम् तयातिशेश्मवक्रियायद्दणाकर्तव्यम् ५ सायनप्रकर्षमा
सेन गुणस्यैवप्रकर्षोनद्रव्यस्य इतिभाष्यम् द्वितीयात्वात अतिशायमानात् ६ कालोऽतिशेते।
कालीकालितरइतिप्राप्नोतिकालतरइतिचेष्यते तयाकालीअतिशेतेकालं कालतराइतिप्राप्नोतिका
लितरेतिचेष्यते इतिभाष्यम् शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रमयविज्ञानम् ७ तदन्ताबस्वार्थेऽ
न्द्रसिद्दर्शनम् ८ श्रेष्ठतमाय मध्यमात् शुक्लशाद्वात्सर्वपरापेक्षाइत्यतिर्वक्तव्या ९ शोभयः कारिता
र्थीवानिर्देशोऽयं समीक्षितः शो नयैनास्तिवक्तव्यं कारितार्थं ब्रवीमिते १ गुणिवागुणसंयोगाद्गुणा।
वा गुणिनायदे अभिव्यक्तसंयोगात्कारितार्थोभविष्यति २ सर्वेषां स्पर्द्धमानो यो मध्यमो लभतेऽसितः
परस्मिन्गतामेतियथामात्रःस्थितेन्यपे ४ असत्वापितरस्तस्मात्प्राप्य पुष्टो भविष्यति वाचकस्त्रैलयोक
यो वाचकस्त्रैलस्य गुरुतम् ५ कारिकास्माः ।।

राम
२२८

तिङश्च ५।३।५६ [illegible] तिङन्तादतिशायने तमप्स्यात् अतिशयेन पचतीति प

चतितमाम् जल्पतितमाम् गच्छतितमाम् भाष्येनतेदं व्याख्यातम् ॥ द्विवचनविभज्योपपदेतरबीय

सुनौ ५।३।५७ प्रागि द्विवचने विभजनीये चोपपदे सुवन्तात् तिङन्ताच्चातिशायने तमप् ईयसुन् इत्ये

तो प्रत्ययौ भवतः अयमनयोरतिशयेन पटुः पटुतरः पटीयान् लघुतरः लघीयान् गुरुतरः गरीया

न् विभज्ये माथुराः पाटलिपुत्रकेभ्यः पटुतरा पटीयांसः तिङन्तात् पचतितराम् द्व्योपपदे उभिवक्त

व्यम् २ इति शिष्यस्य नवक्तव्यम् नेदं यारि भाषिकस्य द्विवचनस्य ग्रहणम् इति भाष्यम् तरबीयसुनो

रेकद्व्यर्थस्य उत्कर्षापकर्षयोरुपसंख्यानम् १ सिद्धं तु गुणस्य थानन्त्यात् २ गुणाभेदेन गुणिनो भेदादि

तिभावः ॥ अजादी गुणवचनादेव ५।३।५८ [illegible] इष्ठन् ईयसुन् इत्येतावजादी गुणवचनादे

व भवतः पटिष्ठः पटीयान् इह तु न पाचकतरः पाचकतमः एवकारश्चेह नियमार्थ नैवं विज्ञायि अ

जादी एव गुणवचनादिति इति भाष्यम् ॥ तुश्छन्दसि ५।३।५९ [illegible] तृन् तृच् इत्येतदन्तादिष्ठन्

तरप्तमपौ घः ॥१।१।२२। संज्ञाप्रदेशः ॥६।३।१७।६।३।४३। तरप् तमप् प्रत्ययौ घसंज्ञौ स्तः ॥ कुमारितरा ॥ कुमारितमा

॥ घसंज्ञायां नदीतरप्रतिषेधः ॥१॥ किमेत्तिङ् [illegible] ॥५।४।११॥ किम् । एदन्त । तिङन्त । अव्यय इत्येतेभ्यो घसं

प्रशस्यस्य श्रः ॥५।३।६०॥ प्रशस्यस्य इत्येतस्य अजाद्योरिष्ठन्नीयसुनोः परयोः श्र इत्ययमादेशः स्यात् । अयमेषामतिशयेन प्रशस्यः । श्रेष्ठः ॥ अयमनयोः प्रशस्यः । श्रेयान् । तयोरिति वक्तव्यम् ॥१॥ एतदेव ज्ञापयति । भवत एते भ्यो गुणवचनेभ्यो ये अजादी इति [illegible] इति भाष्यम् ॥४×

[illegible]त् इत्येतौ प्रत्ययौ भवतः आस्तुतिं करिष्ठः दोहीयसी धेनुः भाषेतन्नेदं व्याख्यानम् ॥ तुरिष्ठेमेयस्सु ६।४।१५४ इष्ठन् इमनि ईयसुन् इत्येतेषु परेषु भसंज्ञकस्य तृ इत्येतस्य लोपः स्यात् इष्ठन् आस्तुतिं करिष्ठः विजयिष्ठः इमनिच् पृथ्वादिगणानन्तरार्थम् ईयसुन् दोहीयसी धेनुः तुः सर्वस्य लोपो वक्तव्यः १ तुः सर्वलोपविज्ञानमनन्त्यस्य वचनात्तानर्थक्यात् इति भाष्यम् ॥×प्रकृत्यैकाच् ६।४।१६३ एकोऽच् यस्मिन् इष्ठेमेयस्सु परेषु प्रकृत्या स्यात् अतिशयेन स्रग्वी स्रजिष्ठः स्रजीयान् अतिशयेन त्वग्वान् त्वचिष्ठः त्वचीयान् एकाच् किम् वसुमान् वसिष्ठः प्रकृत्यैकाजिष्ठेमेयस्सु वेदे काचउ चारण सामर्थ्यादवचनात्प्रकृतिभावः १ विन्मतोर्लुगर्थं प्रकृतिभावो वक्तव्यः २ प्रकृत्याकेराजन्यमनुष्ययुवानः २ प्रकृत्याके राजन्यमनुष्ययुवानः १ इति काशिका राजन्य मनुष्य युवन् इत्येतेऽकच्यस्मिन् प्रत्यये परे प्रकृत्या भवन्ति राजन्यकम् मानुष्यकम् आपत्यस्य च तद्धितेनाति यलोपो न भवति यूनो भावः यौवनकः मनोज्ञादिना वुञि सति नल्लद्धितः इति टिलोपो न भवति ॥×स्थूलदूरयुव ६।४।

ज्य च ॥५।३।६१॥ प्रशस्य इत्येतस्य इष्ठन्नीयसुनोः परयोः ज्य आदेशः स्यात् ॥ अयमेषां ज्येष्ठः । अयमनयोः ज्यायान् । ॥ ह्रस्वा

४४ मनयोर्वृद्धः ज्यायान्॥ अंतिकबाढयोर्नेदसाधौ॥ ५।३।६३॥ अंतिकबाढ इत्येतयोरिष्ठन्नीयसुनोपरयोर्यथाक्रमं नेद साध इत्येतावादेशौ भवतः॥ इदमेषां नेदिष्ठम्। इदमनयोर्नेदीयः॥ इदमेषां साधिष्ठः। अयमनयोः साधीयान्॥ ४४

॥६१॥ ज्य इत्येतस्मात्परस्य ईयस इत्येतस्य आ इत्ययमादेशः स्यात् ज्यायान् ज्यायांसौ [illegible] लोपस्यापि दावव।
दि नत्वादात्वविधानं सति लोपे ह्रस्वत्वैविति दीर्घे नापि सिध्यति इति काशिका ये गाहुस्ते पुनर्नहं तावविधिः।
भाव्यमानेन सवर्णानां ग्रहणं न इति परिभाषेर्मे ॥ वृद्धस्य च॥ ५।३।६२॥ वृद्ध इत्येतस्य इष्ठन्नीयसुनोः पर
योर्ज्यादेशः स्यात्॥ अयमेषां वृद्धः। ज्येष्ठः। अयं [illegible] स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गु
णः॥ ६।४।१५६॥ स्थूल दूर युवन् ह्रस्व क्षिप्र क्षुद्र इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परेषु
पूर्वस्य च गुणो भवति स्थूल स्थविष्ठः दविष्ठः यविष्ठः ह्रसिष्ठः क्षेपिष्ठः क्षोदिष्ठः ह्रस्व क्षिप्र इत्ये
ताभ्यां पृथ्वादिपाठादिमनिच् ह्रसिमा क्षेपिमा ईयसुन् स्थवीयान् दवीयान् यवीयान् ह्रसीयान्
क्षेपीयान् क्षोदीयान् परं किम् यविष्ठः ह्रसिष्ठः पूर्वस्य यणादेर्लोपो मा भूत् पूर्वग्रहणं विस्पष्टा
र्थम् इत्यादि एतच्चैतं भाष्येनव्याख्यातम्॥ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां

स०कौ

३४०

340

प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ६।४।१५७ प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां स्थाने क्रमात् प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्राघि वृन्द इत्येते आदेशा भवन्ति इष्ठेमेयस्सु परेषु इष्ठन् प्रेष्ठः स्थेष्ठः स्फेष्ठः वरिष्ठः बंहिष्ठः गरिष्ठः वर्षिष्ठः त्रपिष्ठः द्राघिष्ठः वृन्दिष्ठः प्रिय स्थिर स्फिर उरु बहुल गुरु दीर्घ इत्येतेभ्यः पृथ्वादित्वादिमनिच् प्रेमा स्थेमा स्फेमा वरिमा बंहिमा गरिमा द्राघिमा ईयसुन् प्रेयान् स्थेयान् स्फेयान् वरीयान् बंहीयान् गरीयान् वर्षीयान् त्रपीयान् द्राघीयान् वृन्दीयान् ॥ बहोर्लोपो भू च बहोः ६।४।१५८ बहु इत्येतस्मात्परेषामिमेयसां लोपः स्यात् बहोः स्थाने भू इत्ययमादेशश्च भूमा भूयान् पृथ्वादिषु बहुशब्दपाठादिमनिच् भूमा वस्थ्यस्यानित्वविज्ञानार्थस्तु नर्थश्चेदिति तदभावे प्रत्ययमेव भू भावः स्यात् इति काशिका ॥

इष्ठस्य यिट् च ॥ ६।४।१५९॥

राम

३४

इष्ठस्य यिट् च ॥ ६।४।१५८ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७ प्रागि ईषदसमाप्तिविशिष्टेऽ
र्थे वर्तमानात्प्रातिपदिकात्स्वार्थे कल्पप् देश्य देशीयर् इत्येते प्रत्यया भवन्ति ईषदसमाप्तः पटुः प
टुकल्पः पटुदेश्यः पटुदेशीयः तिङश्चेत्येव पचतिकल्पम् ईषदसमाप्तौ क्रियाप्रधानत्वात् लिङ्गव
चनानुपपत्तिः १ प्रकृत्यर्थविशेषणत्वात्सिद्धम् इति भाष्यम् प्रकृत्यर्थे वे लिङ्गवचनानुपपत्तिः २
सिद्धं तु तत्स्वभावत्वादुत्तरपदार्थप्रत्ययवचनात् ३ कालादिप्रत्ययविधानानुपपत्तिः कस्यमूजकालल्द
कल्पाकल्पादीनां चासमाप्तिवचनात् ४ सिद्धं त्वाशंसायां भूतवद्वचनात् ५ ॥ विभाषा सुपो बहुच्
पुरस्तात्तु ५।३।६८ प्रागि ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात्सुबन्ताद्विभाषा बहुच् प्रत्ययः सच पुरस्ता
देव न तु परतः बहुपटुः पटुकल्पः पटुदेश्यः पटुदेशीयः सुपः किम् पचति बहुचि सुब्ग्रहणमस
र्वत्र तिङो विधानम् १ ज्ञाप्यते इति शेषः बहुचि सुब्ग्रहणं सर्वत्र तिङो विधानात् २ विधानमनुवृ
त्तिः स्वरः प्रातिपदिकत्वात् ३ सुब्ग्रहणं नित्यसमासार्थम् ४ पुरस्तादेवेति न विभाषाग्रहणेन सर्वत्र

ऽधिसंबध्यते किन्तर्हि ङ्क्रजभिसम्बध्यते इति भाष्यम् प्रत्ययेनार्थे लिङ्ग वचनं च न ङ्यवयवेः पि यथा।
स्यात् ५ तमादिभ्यः कल्पादयो विप्रतिषेधेन ६ प्रकृतेरेव प्रकर्षे ऽर्थे तेतमादिरीषत्प्रयानतात् ७
पटुकल्पतरः कुत्सितार्थिकाः प्रत्ययाः प्रकृतितो लिङ्ग वचनान्यतिवर्तन्ते ८ परिभाषेयम् ॥ प्रकार
वचने जातीयर् ५।३।६९ प्रागि सामान्यस्य भेदको विशेषः प्रकारः तद्वति वर्तमानात्स्वार्थे
जातीयर् स्यात् पटुप्रकारः पटुजातीयः प्रकारवति चायम् प्रकारमात्रे थाल् इत्यादि सूत्रद्वयं भाष्ये
न व्याख्यातम् ॥ प्रागिवात्कः ५।३।७० प्रागि इवे प्रतिकृतौ इति सूत्रात् प्राक् कप्रत्ययोऽधिकृ-
तो वेदितव्यः वक्ष्यति अज्ञाते अश्वकः तिङन्तादयं नेष्यते ॥ अव्ययसर्वनाम्नामकच्प्राक्टेः ५।३।
७१ प्रागि अव्ययानां सर्वनाम्नां तिङन्तानां च प्रागिवीयेष्वर्थेषु टेः प्राक् अकच् स्यात् उच्चकैः नीचकैः
सर्वनाम्नाम् सर्वके विश्वके तिङन्तानाम् पचतकि जल्पतकि ॥ कस्य च दः ५।३।७२ प्रागि क
इत्येतदन्तस्याव्ययस्याकच् संनियोगेन द इत्ययम् आदेशः स्यात् धिक् धकित् हिरुक् हिरकुत् पृथक् पृ।

स०कौ ३४१ 341

ता०म ३४।

यकत् अनोकारसकारभकारादौ १ ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् १ आगि
युवकयोः आवकयोः युष्मकासु अस्माकासु युष्मकाभिः अस्मकाभिः ओकारेत्यादि किम् त्वया
का मयका अव्ययकच् सुपवन्तस्य टेः प्राक् अकच् अकरणात् तूष्णीमः काम् २ प्रागि सचमित्यादस्मा
दचः परः तूष्णीमिति शति तिष्ठति तूष्णीकाम् शीले कोमलोपश्च ३ प्रागि तूष्णीशीलः तूष्णी
कः अनवकुत्सितादानादेशात्वादुत्सर्गमतिषेयः ४ कवियेसमादयः एतेविप्रतिषिद्धम् ५ पटु
तरकः पटुतमकः कदाचित्छिन्नकतरादयः ६ परविप्रतिषेधोऽपीतिभावः छिन्नकतरम् एक
देशग्रयानस्य समासः ७ अर्देषिप्पलिका उत्तरपदस्य ग्रयानस्य समासः कल्विग्रर्धम् ८ नवग्राम
कम् नवराष्ट्रकम् कदाचिद्वृद्धः ९ स्वलम्पग्रोयकौ स्वलमम्ग्रोयकौ स्नेरविशेषः ॥ अज्ञाते
५।३।७३ प्रागि अज्ञातोपाधिकेऽर्थे वर्तमानान्मातिङिति पदिकात्स्वार्थेकप्रत्ययः स्यात् कस्यायमश्वः अ
श्वकः उष्ट्रकः गर्दभकः भाष्येतुनेदंव्याख्यातम् ॥ कुत्सिते ५।३।७४ प्रागि कुत्साविशिष्टेऽर्थे व

र्तमानात्प्रातिपदिकात्स्वार्थिकप्रत्ययः स्यात् कुत्सितोऽश्वः अश्वकः कुत्सितादीनामर्थे चेल्लिङ्ग
वचनादुपपत्तेः १ कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा दारादिषु २ सिद्धन्तु ये।
न कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् ३ ॥ संज्ञायां कन् ५।३।७५ प्रागि कुत्साविशि
ष्टेऽर्थे वर्तमानात्प्रातिपदिकात्संज्ञायां कन् स्यात् शूद्रकः शर्मकः स्वरार्थं वचनम् इत्यादि सूत्राए
कं भाष्ये तु न व्याख्यातम् ॥ अनुकम्पायाम् ५।३।७६ प्रागि अनुकम्पाविशिष्टेऽर्थे वर्तमानात्प्रा
तिपदिकात्स्वार्थिकप्रत्ययाः स्युः अनुकम्पितः पुत्रः पुत्रकः वत्सकः दुर्बलकः ॥ नीतौ च तद्युक्तात्
५।३।७७ प्रागि नीतौ गम्यमानायामनुकम्पायुक्तात्प्रातिपदिकात्स्वार्थिकप्रत्ययः स्यात् सामदा
नादिरूपयोनीतिः हन्त ते धानकाः हन्त ते गुडकाः एहि रे चारणसामदात् अनुकम्पायुक्तात्प्रत्ययः अने।
न तु परम्परानुकम्पायुक्तादित्थीयते ॥ बह्वचो मनुष्यनाम्नष्ठज्वा ५।३।७८ प्रागि नीतावनुकम्पा
युक्तात् बह्वचो मनुष्यनाम्नो वा ठच् स्यात् देविकः देवदत्तकः यज्ञिकः यज्ञदत्तकः बह्वचः किम् देवकः

मनुष्यनाम्नः किम् भद्रबाहुकः ॥ घनिलचौ च ५।३।७९ प्रागि नीतावनुकम्पायुक्तादह्वचो मनुष्य
नाम्नो घन् इलच् इत्येतौ प्रत्ययौ भवतः चकाराट्ठच्कौ देवियः देविलः देविकः देवदत्तकः ॥ ४

प्राचामुपादेरडज्वुचौ च ५।३।८० प्रागि नीतावर्कानुकम्पायुक्तादुपशब्द आदेर्बह्वचो मनुष्यनाम्नोऽ
डच् वुच् इत्येतौ प्रत्ययौ वा भवतः चकाराद्घनिलचौ च वा उपडः उपकः उपियः उपिलः उपिकः प
डेकः उपेन्द्रदत्तकः प्राचां ग्रहणं पूजार्थम् ॥ जातिनाम्नः कन् ५।३।८१ प्रागि नीतावनुकम्पा
युक्ताज्जातिनाम्नो मनुष्यनाम्नः कन् वा स्यात् सिंहकः शरभकः पक्षे यथाप्राप्तं प्रत्ययाः सिंहियः
सिंहिलः ॥ अजिनान्तस्योत्तरपदलोपश्च ५।३।८२ प्रागि अजिन इत्येतदन्तान्मनुष्यनाम्नोऽनुक
म्पायुक्तात्कन् स्यात् अजिन इत्येतस्य च लोपः स्यात् अनुकम्पितो व्याघ्राजिनः व्याघ्रकः सिंहकः प्रसादे।

शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ५।३।८४ प्रागि शेवल सुपरि विशाल वरुण अर्य
मन् इत्येतदादिकानां मनुष्यनाम्नां ठाजादौ परतस्तृतीयादच ऊर्ध्वभागस्य लोपः स्यात् अनुकम्पितः शे
वलदत्तः शेवलिकः शेवलियः शेवलिलः सुपरिदत्तः सुपरिकः सुपरियः सुपरिलः विशालद
त्तः विशालिकः विशालियः विशालिलः वरुणदत्तः वरुणिकः वरुणियः वरुणिलः अ
र्यमदत्तः अर्यमिकः अर्यमियः अर्यमिलः वरुणादीनां च तृतीयात् स चाकृतसन्धीनाम् ७ आदि
ग्रहः प्रकारे एकस्यैवोपाधानत्वसादृश्यनिमित्तम् शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीना
मिति वक्तव्यम् २ इति काशिका शेवलेन्द्रदत्तः शेवलिकः सुपर्याशीर्दत्तः सुपरियः कृतसन्धीनां
लोपेन तु शेवलयिकः सुपर्यिकः इत्यादि प्रसङ्गेन वाचिकादिषु दृष्टत्वप्रतिषेधः २ एवं सूत्रविषय
कमेतत् पदद्वन्द्वकत्वादि सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् २ एवं सूत्रविषयकमे
तत् एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः २ इति काशिका प्रागि वागाशीर्दत्तः वाचिकः आ

पृ॰ कौ
३४४
343

राम
३४५

शीर्द्दन्तस्य लोपे चान्ते भसंज्ञया पदसंज्ञा वा बाधा कृतं न सूत्रेण शीर्दन्तस्य लोपे तु यस्येति चेति लोपस्य
स्थानिवद्भावेनाकारान्ते भसंज्ञा चान्ते तु पदसंज्ञैवेति कृतं प्रसज्येत षष्ठ्यां ज्ञादिवचनात्सिद्धम् ५ मा
गि षडङ्गुलिदत्तः षडिकः ठाव स्थायां ह्रस्वः. लिदत्तस्य सूत्रेणैव लोपः यस्येति लोपस्य स्थानिवद्भा
वेनाकारान्ते भसंज्ञा यान्ते तु पदसंज्ञैवेति न प्रसक्तं भवति अङ्गुलिदत्तस्य सर्ववार्तिकेन लोपे तु भा
न्ते भसंज्ञया पदसंज्ञा वा बाधात् नत्वं न स्यात् ॥ अजिनान्तस्योत्तरपदलोपश्च ५। २।८२ प्रागि अ
जिन इत्येतदन्तान्मनुष्यनाम्नोऽनुकम्पायुक्तात् कन् स्यात् अजिन इत्येतस्य च लोपश्च स्यात् अनु
कम्पितो व्याघ्राजिनः व्याघ्रकः सिंहकः कृष्णकः ॥ अल्पे ५। ३८५ प्रागि अल्पत्वविशिष्टे
ऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे कप्रत्ययः स्यात् अल्पं तैलं तैलकम् ॥ ह्रस्वे ५।३। ८६ प्रागि
ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे कप्रत्ययः स्यात् ह्रस्वो वृक्षः वृक्षकः पटकः स्तम्भकः
॥ संज्ञायां कन् ५।३। ८७ प्रागि ह्रस्वत्वे अनुकम्पायां संज्ञायां स्वार्थे कन् स्यात् वंशकः वेणुकः दण्डकः

स. कौ.
२४४
344

भाष्ये तु नेदं व्याख्यातम् ॥ कुटीशमीशुण्डाभ्यो रः ५।३।८८ प्रागि कुटी शमी शुण्डा इत्येतेभ्यो ह्रस्वत्वे द्योत्ये रः स्यात् ह्रस्वा कुटी कुटीरः शमीरः शुण्डारः कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंस्त्ववचनम् ॥ कुत्वा डुपच् ५।३।८९ प्रागि कुतू इत्येतस्माद्ध्रस्वत्वे द्योत्ये डुपच् स्यात् ह्रस्वा कुतूः कुतुपः चर्म्ममयं स्नेहपात्रम् इत्यादि सूत्रद्वयं भाष्ये तु न व्याख्यातम् ॥ कासूगोणीभ्यां ष्टरच् ५।३।९० प्रागि कासू गोणी इत्येताभ्यां ह्रस्वत्वे द्योत्ये ष्टरच् स्यात् ह्रस्वा कासूः कासूतरी शक्त्याख्यमायुधम् गोणीतरी षङ्गी षर्थः ॥ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ५।३।९१ प्रागि वत्स उक्ष अश्व ऋषभ इत्येतेभ्यस्तनुत्वोपाधिकेभ्यः स्वार्थे ष्टरच् स्यात् वत्सतरः उक्षतरः अश्वतरः ऋषभतरः गुणस्य तनुत्वेऽयं प्रत्ययः वत्सादिभ्यस्तनुत्वे कार्श्यप्रतिषेधः २ ॥ किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ५।३।९२ प्रागि किम् यद् तद् इत्येतेभ्यो निर्द्धारणवाचिभ्यो द्वयोरेकस्य निर्द्धारणे स्वार्थे डतरच् स्यात् कतरः कयोः तयोः यतरः पटुरनयोः कतरः कारकोऽनयोः कतरो देवदत्तोऽ

रा. म.
२४४

नयोः । यतरः ततरः ज्ञात्वा गुणेन किं पयावा समदृष्ट्यादेकेरेशास्यैतद्दकारस्य निर्धारणम् ॥
वा बहूनां जातिपरिप्रश्ने डतमच् ५।३।९३ प्रागि किम् यद् तद् इत्येतेभ्यो बहूनामेकस्य निर्धा-
रणे सति जातिपरिप्रश्ने वा डतमच् स्यात् कतमो भवतां कठः यतमो भवतां कठः ततम आगच्छतु
वा ग्रहणादेकत्रापि को भवतां कठः यकः सकः किमादीनां द्विबहुर्थेषु पर्यायविधानादप्राप्तावन
र्थकाम् १ कतरो भवतां वैष्णवः इत्यत्र बहूनां निर्धारणे डतरच् इष्यते द्वयोरिति एकवचनेन कार्य
म् कतमो भवतां वादतरः इत्यत्र जातिपरिप्रश्ने दर्शनादवगम्यते जातिपरिप्रश्ने इति च न कार्यमिति भा
वः वा बहूनां जातिपरिप्रश्ने डतमजिनत्रवर्द्ध ग्रहणमनर्थकम् १ इत्यपरस्य द्वयोरेकस्य निर्धार
णे डतरचो बाधकत्वात् ॥ एकाच्च प्राचाम् ५।३।९४ प्रागि एक इत्येतस्माद् द्वयोर्बहूनां चैकस्य
निर्धारणे डतरच् डतमच् इत्येतौ प्रत्ययौ भवतः एकतरो भवतोर्देवदत्तः एकतमो भवतां देवदत्तः प्रा
ग्वचनाद्यर्थं च विभाषाप्रकरणात् २॥ अवक्षेपणे कन् ५।३।९५ प्रागि अवक्षेपणे वर्तमाना।

स॰कौ
३४५
345

त्यातिपदिकात्स्वार्थेकन्स्यात् व्याकरणकेनत्वंगर्वितः यन्नरसकृत्स्वार्थमुपादीयतेनहिष्टोदा
हरणम् इतिभाष्यम् ॥ एवेप्रतिकृतौ ५।३।९६ इवार्थेप्रतिकृतौवर्तमानात्प्रातिपदिका
त्स्वार्थेकन्स्यात् अश्वइवायमश्वप्रतिकृतिः अश्वकः उष्ट्रकः गर्दभकः प्रतिकृतौकिम् गौरि
वगवयः इत्यादिसूत्रद्वयंभाष्येननव्याख्यातम् ॥ संज्ञायांच ५।३।९७ इवार्थेगम्यमानेकन्स्यात्
समुदायेनचेत्संज्ञागम्यते अश्वसदृशस्यसंज्ञा अश्वकः यत्प्रतिकृतयर्थमिदंसूत्रम् ॥ लुम्मनुष्ये
५।३।९८ मनुष्येवाच्येसंज्ञायांकनोलुप्स्यात् चञ्चेवमनुष्यः चञ्चा दासी खरकुटी मनुष्येकि
म् अश्वकः देवपथादिभ्यश्चेत्याऽयम् लिङ्गविशिष्टंलुम्मनुष्ये । लुबकः नतल्लुगुक्तइतिभावः
॥ जीविकार्थेचापण्ये ५।३।९९ जीविकार्थंयद्वपण्यंतस्मिन्वाच्येकनोलुप्स्यात् वासुदेवः शि
वः स्कन्दादिः देवलकाजीविकार्थाः प्रतिमास्तास्वेदंरूपमनपणितादेवप्रतिकृतयउच्यन्ते अपण्ये
किम् हस्तिकान्विक्रीणीते ॥ देवपथादिभ्यश्च ५।३।१०० देवपथ इत्येवम

स॰कौ
३४५

दिभ्यः परस्य प्रतिकृतौ संज्ञायां च विहितस्य कनो लुप् स्यात् देवपथः हंसपथः देवपथ हंसपथ वा
रिपथ रथपथ स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्र
ग्रीव वामरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य देवपथादिराकृतिगणः इत्यादि सत्ववद्भाष्येतु नया
ख्यातम् ॥ वस्तेर्ढञ् ५।३।१०१ वस्ति इत्येतस्मादिवार्थे ढञ् स्यात् वस्तिरिव वास्तेयम् ॥ शिला
याढः ५।३।१०२ शिला इत्येतस्मादिवार्थे ढः स्यात् शिलेव शिलेयं दधि शिलाया इति योगविभागा
त् ढञपि शैलेयम् ॥ शाखादिभ्यो यः ५।३।१०३ शाखा इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थे यः
स्यात् शाखेव शाख्यः शाखा मुख जघन शृङ्ग मेघ अभ्र चरण स्कन्ध स्कन्द उरस् शिरस् अ
ग्र शरण शाखादिः ॥ द्रव्यं च भव्ये ५।३।१०४ द्रव्य इत्येतद्भव्येऽभिधेये निपात्यते द्रु इवार्थे यत् इ
यमस्य माणवकः अभिप्रेतार्थपात्रभूत इत्यर्थः ॥ कुशाग्राच्छः ५।३।१०५ कुशाग्र इत्येतस्मादिवा
र्थे छः स्यात् कुशाग्रमिव कुशाग्रीया बुद्धिः ॥ समासाच्च तद्विषयात् ५।३।१०६ इवार्थविषयात्समा

सादिवार्थेच्छः स्यात् काकतालीयो देवदत्तस्य वधः अन्धकपाणीयः अस्मादेव ज्ञापकादिवार्थे समासः सहस्रुपेतिका द्वाविवार्थौ काकागमनमिव तालपतनमिव काकतालम् काकतालमिव काकतालीयम् इति भाष्यम् प्रकृतिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ तत्र काकागमनं देवदत्तागमनस्योपमानं तालपतनं दस्युपतिपातनस्य तालेन वधः काकस्य वधः स देवदत्तस्य दस्युनावधस्योपमानम् ॥ इति वृत्तादिः काकतालीयादिशब्दा वाच्यः समस्यन्ते इति कैयटः ॥ शार्कराादिभ्योऽण् पा०५।३।१०७ शर्करा इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण् स्यात् शार्करम् शर्करा कपालिका कपाटिका कनिष्ठिका पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नराची नकुल सिकता शार्करादिः इत्यादिकादश्यान्तलयोगी भाष्येतु मध्याख्यातानि ॥ अङ्गुल्यादिभ्यष्ठक् पा०५।३।१०८ अङ्गुली इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थे ठक् स्यात् आङ्गुलिकः अङ्गुली भरुज बभ्रु वल्गु मण्ड मण्डल शष्कुली हरिकपि मुनि तरु खल उदश्वित् गोणी उरस् कुलिश अङ्गुल्यादिः ॥ एकशा

लायाष्ठजन्यतरस्याम् ५।३। १०९ एकशाला इत्येतस्मादिवार्थे ठच् स्यात् पक्षे ठक् एकशालेव एक-
शालिकः ऐकशालिकः ॥ कर्कलोहितादीकक् ५।३।११० कर्क लोहित इत्येताभ्यामिवार्थे ईक-
क् स्यात् कर्कः शुक्लोऽश्वः तत्सदृशः कार्कीकः लौहितीकः स्फटिकः ॥ पूगाञ्ञ्योऽग्रामणीपू-
र्वात् ५।३।११२ नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगाः तद्वाचिनः प्रातिपदिका-
दग्रामणीपूर्वात्स्वार्थे ञ्यः स्यात् लौहितध्वज्यः लौहितध्वज्यौ लौहितध्वजाः शैब्यः शैब्यौ शिबयः अ-
ग्रामणीपूर्वात्किम् देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः ॥ व्रातच्फञोरस्त्रियाम् ५।३।११३ ना-
नाजातीयानामनियतवृत्तीनामुत्सेधजीविनां संघा व्राताः तद्वाचिभ्यः च्फञ्प्रत्ययान्तेभ्यश्च स्वार्थे ञ्यः
स्यात् न तु स्त्रियाम् कापोतपाक्यः कापोतपाक्यौ कपोतपाकाः व्रैहिमत्यः व्रैहिमत्यौ व्रीहिमताः
च्फञन्तात् कौञ्जायन्यः कौञ्जायन्यौ कौञ्जायनाः ब्राध्नायन्यः ब्राध्नायन्यौ ब्राध्नायनाः अस्त्रियां किम्
कपोतपाका कौञ्जायनी ॥ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ५।३।११४ वाहीक

देशेष्वायुधजीविसंघवाचिनः प्रातिपदिकादब्राह्मणराजन्यवर्जितात्स्वार्थे ञ्यट् स्यात् क्षौद्रक्यः क्षौद्र

क्यौ क्षुद्रकाः मालव्यः मालव्यौ मालवाः टकारो ङीबर्थः क्षौद्रकी मालवी आयुधेति किम् मल्लाः स

वृकौ
२४८

घेति किम् सम्राट् वाहीकेष्विति किम् शबराः अब्राह्मणराजन्यादिति किम् गोपालवाः शालङ्कायनाः राज(

न्याः ॥ वृकाट्टेण्यण् ५।३।११५ वृक इत्येतस्मादायुधजीविसंघवाचिनः स्वार्थे टेण्यण् स्यात् वार्केण्यः

347

वार्केण्यौ वृकाः टकारो ङीबर्थः वार्केणी आयुधेत्यादि किम् वृकः ॥ दामन्यादित्रिगर्तषष्ठाच्छः ५

१२।११६ दामनि इत्येवमादिभ्यः त्रिगर्तः षष्ठो येषां तेभ्यश्चायुधजीविसंघवाचिभ्यः स्वार्थे छः स्यात् दा

मनीयः दामनीयौ दामनयः त्रिगर्तषष्ठेभ्यः कौण्डोपरथीयः कौण्डोपरथीयौ कौण्डोपरथाः एवं

दाण्डकीयइत्यादि दामनि औलपि वैजवापि औदकि औदङ्कि आच्युतन्ति आच्युतदन्ति शाकुन्त

कि आकिदन्ति औडवि काकदन्तकि शात्रुन्तपि सार्वसेनि बिन्दु वैन्दवि तुलभ मौञ्जायन काक

दाम
२४८

न्दि सावित्रीपुत्र दामन्यादिः आकृतिगणः त्रिगर्तषष्ठेषु कौण्डोपरथ दाण्डकी क्रौष्टकिर्जालमानि ब्रह्मगुप्त

गुमोः यञाल्लकिः इति काशिकायाम् ॥ पर्श्वादियौधेयादिभ्योऽणञौ ५।३।११७ पर्शु इ
त्येवमादिभ्यः यौधेय इत्येवमादिभ्यश्चायुधजीविभ्यः स्वार्थे क्रमेणाणञौ स्तः इत्येतौ प्रत्ययौ भवतः
पार्शवः पार्शवौ पार्शवाः यौधेयादिभ्यश्च यौधेयः यौधेयौ यौधेयाः पर्शु असुर रक्षस् वाह्लीक
वयस् वसु मरुत् सत्वत् दशार्ह पिशाच अशनि कार्षापण पर्श्वादिः यौधेय कौशेय शौक्रेय
शौभ्रेय धार्तेय वार्तेय ज्यावाणेय त्रिगर्त भरत उशीनर यौधेयादिः ॥ अभिजिद्विदभृच्छालाव
च्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ५।३।११८ अभिजित् विदभृत् शालावत् शिखावत् श
मीवत् ऊर्णावत् श्रुमत् इत्येतेभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् अभिजितोऽपत्यम् आभिजिमः आभि
जिमः अभिज्यौ आभिजिताः एवं वैदभृत्यः शालावत्यः शैखावत्यः शामीवत्यः और्णावत्यः श्रौम
त्यः अस्त्रियामित्येव आभिजिती अणो गोत्राद्वचनम् इह मा भूत् आभिजितो मुहूर्तः गोत्रमि
ति शक्यमवक्तुम् कथम् आभिजितकः गोत्राद्यं स्वार्थिकः गोत्रमेव भवति इति भाष्यम् ॥ [illegible]।

सू.कौ
३४८
348

स्त्रद्यज्ञाः ५।२।११९ संज्ञाघदेशाः २।४।९२ सूत्राज्ञ्यो ऽग्रामणीशब्दादिन्याऽऽभ्यये प्रत्यया उक्ता सैत।
दास्तसंज्ञाका भवन्ति लौहितध्वजाः वीहिमताः कौञ्ज्ञायनाः लुइकाः हुकाः दामनयः पर्शवः।
यौधेयाः आभिजिताः भाष्यितुने द्व्याख्यानम् ॥ इति ९५ सूत्राणिभाष्ये ५।३।२। व्याख्या।
तानि इतिसूत्रवार्तिकपञ्चमाध्यायस्य तृतीयः पादः ॥ ॥ पादशतस्य संख्यादेः वीप्सायां
वुन् लोपश्च ५।४।१ पाद शत इत्येतदन्तात्संख्यादेः प्रातिपदिकाद्वीप्सायां गम्यमानायां वुन् स्यात्
तत्सन्नियोगेन च तयोरन्त्यलोपश्च द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति द्वे द्वे शते ददाति द्विशतिकां
ददाति स्त्रीत्वं स्वभावात् पादशतस्य किम् द्वौ द्वौ माषौ ददाति संख्यादेः किम् पादं पादं ददाति वी
प्सायां किम् द्वौ पादौ ददाति यस्येति चेति लोपेन तस्य स्थानिवत्त्वात् पदादेशो न स्यात् तेनोः परनिमित्तलो
पविधानम् पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् १ द्विमोदकिकां ददाति ॥ दण्डव्यवसर्ग।
योश्च ५।४।२ पाद शत इत्येतदन्तात्संख्यादेः प्रातिपदिकाद्दण्डनेदाने च गम्ये वुन् स्यात् तत्सन्नियो

राम
३४८

गेन चतयोरन्त्यलोपः द्वौयस्यैदगिनः द्विपदिकांददातिः द्विपदिकांव्यवसृजति द्विशतिकाम्
भाष्यतनेदंव्याख्यातम् ॥ स्थूलादिभ्यः प्रकारवचने कन् ५।४।३ स्थूल इत्येवमादिभ्यः प्रकारवच
नेयोस्येकन्स्यात् स्थूलप्रकारः स्थूलकः स्थूल अणु माष इषु कृष्णतिलेषु यवव्रीहिषु इक्षु ति
लंपाद्यकालावदातमस्तरायाम् गोमूत्र आच्छादने सुराया अहौ जीर्णशालिषु पत्रमूलसमस्तो व्यस्त
श्च कुमारीपुत्र कुमारीश्वशुर मणि स्थूलादिः कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् २ चञ्चत्कः
बृहत्कः चञ्चद्बृहतोरुपसंख्यानम् २॥ अनत्यन्तगतौ क्तात् ५।४।४ अत्यन्तगतिरशेषसम्बं
न्धस्तदभावेनात्यन्तगतौ वर्तमानात् क्तान्तात् प्रातिपदिकात् कन् स्यात् छिन्नकम् भिन्नकम् अनत्यन्तगतौ कि
म् छिन्नम् भिन्नम् अनत्यन्तगतौ क्तान्नमादयः सर्वविप्रतिषिद्धम् १ तदन्ताद्वा स्वार्थिकेन वचन
म् २ छिन्नतरकम् ॥ न सामिवचने ५।४।५ सामिपर्यायेऽपपदे क्तप्रत्ययान्तात् कन् स्यात् सा
मिकृतम् अर्धकृतम् एतदेवान्तस्वार्थिकं कनं ज्ञापयति बहुतरकम् सामिवचने प्रतिषेधानर्थक्यं

प्रकृत्याभिहितत्वात् २ ॥ बृहत्या आच्छादने ५।४।६ बृहती इत्येतस्मादाच्छादने वर्त्तमानात्स्वार्थे क
न्स्यात् बृहतिका आच्छादने किम् बृहती छन्दः भाष्ये तु नेदं व्याख्यातम् ॥ अषडक्षाशितंग्वलंक
र्म्मालम्पुरुषाध्युत्तरपदात्खः ५।४।७ अषडक्ष आशितङ्गु अलंकर्म्म अलम्पुरुष इत्येतेभ्योऽधि इत्ये
तदुत्तरपदकेभ्यश्च प्रातिपदिकेभ्यः स्वार्थे खः स्यात् अषडक्षीणो मन्त्रः द्वाभ्यामेव कृत इत्यर्थः आशि
तंगवीनमरण्यम् निपातनादेवं पदसमागमः अलंकर्म्मीणि अलंकर्म्मीणः अलम्पुरुषाय अ
लम्पुरुषीणः अध्युत्तरपदात् राजाधीनः ब्राह्मणाधीनः अध्युत्तरपदात्प्रत्ययविधानानुपपत्तिर्वि
ग्रहभावात् १ तस्मात्तदेवमिति सर्वाधीनम् २ अत्र पदे सकारस्य इत्संतानस्मात् नित्यः प्रत्ययोऽयम्
के पुनर्नित्याः प्रत्ययाः तमादयः प्राक्कनः ञ्यादयः प्राग्वुनः आमादयः प्राङ्मयटः बृहतीजात्य
न्ताः समासान्ताश्चेति इति भाष्यम् ॥ विभाषाञ्चेरदिक्स्त्रियाम् ५।४।८ अञ्चु इत्येतदन्तात्प्रा
तिपदिकाददिक्स्त्रियां वर्त्तमानात्स्वार्थे वा खः स्यात् प्राक् प्राचीनम् प्रत्यक् प्रतीचीनम् अवाक्

इ.कौ
३५८
359

रम
३५८

अर्वाचीनम् अदिक्स्त्रियांकिम् प्राचीदिक् दिग्ग्रहणंकिम् प्राचीनाब्राह्मणी स्त्रीग्रहणंकिम् प्रा
चीनंग्रामाद्राम्राः ॥ जात्यन्ताच्छबन्धुनि ५।४। ९ जाति इत्येतदन्तात्प्रातिपदिकाद्बन्धेवर्त्तमाना
त्स्वार्थेछः स्यात् ब्राह्मणजातीयः क्षत्रियजातीयः बन्धुनिकिम् ब्राह्मणजातिःशोभना इत्यादि
सूत्रपञ्चकंभाषेतुनव्याख्यातम् ॥ स्थानान्ताद्विभाषासस्थानेनेतिचेत् ५। ४।१० स्थान इत्येत
दन्तात्प्रातिपदिकाद्वाछः स्यात् स्थानेनतुल्यश्चेत्स्थानान्तवाच्यः पित्रातुल्यः पितृस्थानीयः पितृ
स्थानः सस्थानेनेतिकिम् गोस्थानम् ॥ अनुगादिनष्ठक् ५।४। १२ अनुगादिन् इत्येतस्मात्स्वा
र्थेठक्स्यात् आनुगादिकः ॥ विसारिणोमत्स्य ५।४।१६ विसारिन् इत्येतस्मान्मत्स्यवाच्येस्वार्थेऽ
ण्स्यात् वैसारिणोमत्स्यः मत्स्येकिम् विसारीदेवदत्तः ॥ संख्यायाःक्रियाभ्यावृत्तिगणने।
कृत्वसुच् ५।४।१७ संख्यावाचिभ्यएककर्त्तृकैकजातीयक्रियाजन्मगणनेवर्त्तमानेभ्यःस्वार्थेकृत्व
सुच्स्यात् पञ्चवारानभुङ्क्त पञ्चकृत्वोऽह्नोभुङ्क्ते षट्कृत्वः सप्तकृत्वः संख्यायाःकिम् भूरिवारा

ए कौ
२५।
350

न भुङ्क्ते । अभ्यावृत्तिः क्रियाया एव संभवतीति क्रियाग्रहणमुत्तरार्थम् । अभ्यावृत्तिग्रहणं किम् । पञ्च
पाकाः । गणने किम् । वाराणस्यां शतं भुङ्क्ते । शतकृत्वो भुङ्क्ते । अत्रापि यथा स्यात् । न ह्यत्राभ्यावृत्तौ शतश
ब्दः किन्तु संख्यानमात्रवाची ॥ द्वित्रिचतुर्भ्यः सुच् ५।४।१८ द्वि त्रि चतुर् इत्येतेभ्यः क्रियाभ्या
वृत्तिगणने वर्तमानेभ्यः स्वार्थे सुच् स्यात् । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते ॥ एकस्य सकृच्च ५।४।१९
एक इत्येतस्मात् क्रियागणने वर्तमानात् स्वार्थे सुच् स्यात् । एक इत्येतस्य सकृदित्ययमादेशश्च । सकृद्भुङ्क्ते
सकृदधीते । न ह्यत्राभ्यावृत्तिः किन्तु गणनमात्रम् । एकः पाक इत्यत्रानभिधानान्न भवति । कृदभिहि
तो भावो द्रव्यवद्भवतीति इति भाष्यम् ॥ विभाषा बहोर्धाऽविप्रकृष्टकाले ५।४।२० बहु इत्ये
तस्मादासन्नकालिके क्रियाभ्यावृत्तिगणने वर्तमानात् स्वार्थे धाप्रत्ययो वा स्यात् । पक्षे कृत्वसुच् । ब
हुधा दिवसस्य भुङ्क्ते । बहुकृत्वो दिवसस्य भुङ्क्ते । बहुकृत्वो दिवसस्य भुङ्क्ते । अविप्रकृष्टकाले किम् ।
बहुकृत्वो मासस्य भुङ्क्ते । इत्यादिस्तत्र च एष्यं भाष्येऽनुव्याख्यानम् ॥ तत्प्रकृतवचने मयट् ५।४।२१

एम
२५०

प्रथमान्तात्प्रकृतोपाधिकात्स्वार्थे मयट् स्यात् प्रकृतमन्नम् अन्नमयम् अपूपमयम् यवागू
मयी यदा प्रथमान्तात्प्रकृतवचनेऽर्थे मयट् अन्नं प्रकृतवचनेऽर्थे मयट् कृतं प्रकृतम् स्यात् ऽस्मि
न्निति अन्नमयो यज्ञः अपूपमयं पर्व ॥ समूहवच्च बहुषु ५।४।२२ प्रकृतवचने बहुषु प्रथ
मान्तात्समूहवत्प्रत्यया भवन्ति चकारान्मयट् च प्रकृता मोदकाः मौदकिकम् मोदकमय
म् यदा मोदकाः प्रकृता अस्मिन् मौदकिको यज्ञः मोदकमयः ॥ अनन्तावसथेतिहभेषजा
ञ्ञ्यः ५।४।२३ अनन्त आवसथ इतिह भेषज इत्येतेभ्यः स्वार्थे ञ्यः स्यात् अनन्तमेव आन
न्त्यम् आवसथ एव आवसथ्यम् इतिह इत्येष निपातसमुदाय उपदेशपारंपर्ये वर्त्तते ऐतिह्यम् भेष
जमेव भैषज्यम् ॥ देवतान्तात्तादर्थ्ये यत् ५।४।२४ देवता इत्येतदन्तात्प्रातिपदिकात्तादर्थ्ये य
त्स्यात् अग्निदेवतायै इदम् अग्निदेवत्यम् देवताशब्दः क्रियावाच्यत्र न तु जातिवाची पितृदेवत्यम्
॥ पादार्घाभ्यां च ५।४।२५ पाद अर्घ इत्येताभ्यां चतुर्थ्यन्ताभ्यां तादर्थ्ये यत्स्यात् पाद्यमुदकम्।

ग्रर्थेस्र् इत्यादि सूत्रद्वयं भाष्येनुनव्याख्यातम् ॥४



देवात्तल् ५।४।२७ देव इत्येतस्मात्स्वार्थेकःस्यात अविरेव अविकः इत्यादि सूत्रद्वयं भाष्येनुनव्याख्यातम् ॥ अवेकः ५।४।२८ अवि इत्येतस्मात्स्वार्थेकःस्यात् अविरेव अविकः इत्यादि सूत्रद्वयं भाष्येनुनव्याख्यातम् ॥ यावादिभ्यःकन् ५।४।२९ याव इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थेकन्स्यात् यावकः याव मणि अस्थि तालु जानु सान्द्र पीत स्तम्ब ऋतावुष्णशीते पशौलूनवियाते अणुनिपुणे पुत्रकृत्रिमे स्नातवेदसमाप्तौ शून्यरिक्ते दानकुत्सिते तनुसूत्रे ईयसश्च ज्ञात अज्ञात कुमारीक्रीडनकानिच यावादिः ॥ लोहितान्मणौ ५।४।३० लोहित इत्येतस्मान्मणौवर्त्तमानात्स्वार्थेकन्स्यात् लोहितोमणिः। लोहितकः लोहितात्लिङ्गबाधनंवा १ लोहिताका लोहितिका वस्त्र

सश्लोककविक्षेमवर्चस्सनिष्केवलउक्थजनसर्वनवसूरमर्तयविष्ठ इत्येतेभ्यश्छन्दसि स्वार्थे यत् १ इतिका
शिका वस्तु … मित्रैर्वसव्यैः अयस् अयस्योवसानाः श्लोक सश्लोक्याः कवि कव्योऽसि क्षेम क्षेम्यमध्यव
स्यति वर्चस् वर्चस्यम् निष्केवल निष्केवल्यम् उक्थ उक्थ्यम् जन जन्यं ताभिः सर्व सर्व्यपाथः नव न
नयामिनव्यम् सूर सूर्य्यः मर्त मर्त्यम् यविष्ठ यविष्ठ्यदोमवाहम् आमुष्यायणामुष्यपुत्रिके तुपसंख्या
नम् २ इतिकाशिका समशब्दादावद्यायो भवतीति वक्तव्यम् २ इतिकाशिका समावद्वसति नवस्य
नूत्नमनप्ख्वौ च २ नवस्य नू आदेशः त्नप् तनप् ख्वौ च प्रत्यया वक्तव्याः २ नूत्नम् नूतनम् नवीनम्
नश्च पुराणे प्रात् २ चकारात्त्नप् तनप् ख्वौ च प्रणम् प्रत्नम् प्रतनम् नवीनं प्रीणम् ॥ वर्णे चानि
त्ये ५।४।३१ लोहित इत्येतस्मादनित्ये वर्णे वर्तमानात् स्वार्थे कन् स्यात् लोहितकः कोपेन अनित्ये कि
म् लोहितौ गौ इत्यादि सूत्रपञ्चकं भाष्ये न व्याख्यातम् ॥ रक्ते ५।४।३२ लोहित इत्येतस्माल्लाक्षा
दिना रक्तेऽर्थे वर्तमानात् स्वार्थे कन् स्यात् लोहितकः पटः लिङ्गबाधनं वेष्यते लोहितिका लोहिनिका शाटी।

ह्र० का०
१५२
352

टी ॥ कालाच्च ५।४।३३ काल इत्येतस्माद्वर्णविशेषवर्णे रक्ते चार्थे वर्त्तमानात्स्वार्थे कन् स्यात् कालकं मुखं वै
लक्ष्येण रक्ते कालकः पटः ॥ विनयादिभ्यष्ठक् ५।४।३४ विनय इत्येवमादिभ्यः स्वार्थे ठक् स्यात्
वैनयिकः सामयिकः औपयिकः विनय समय उपायो ह्रस्वत्वं च संप्रति संगति कथंचित् अकस्मा
त् समाचार उपचार समयाचार व्यवहार संप्रदान समुत्कर्ष समूह विशेष अत्यय विनयादिः ॥
वाचो व्याहृतार्थायाम् ५।४।३५ वाच् इत्येतस्मात्संदेशवाचि वर्त्तमानात्स्वार्थे ठक् स्यात् वाचिकं संदेश
वचनम् व्याहृतार्थायां किम् मधुरा वाक् ॥ तद्युक्तात्कर्मणोऽण् ५।४।३६ कर्मन् इत्येतस्माद्व्या
हृतार्थवाग्युक्तकर्मवाचिनः स्वार्थेऽण् स्यात् कर्मैव कार्मणम् वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः अण्
प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दसि १ कौलालः वारुडः नैषादः चाण्डालः आमि
त्रः अण्प्रकरणे कुलालवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम् १ इति काशिका भाग
रूपनामभ्यो धेयः २ भागधेयम् रूपधेयम् नामधेयम् मित्राच्च छन्दसि २ मित्रधेयेयनस्य अणामित्रा

राम
१५२

च ४ छन्दसीत्येव आग्नेयः चकारान्नीशादपि मैत्रेयम् आग्निमित्राव ५ सान्नाय्यानुयाजावरानुष्टु

ष्कचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनानि ५ इत्येतानि अनन्तानि

छन्दसि भाषायां च निपात्यन्ते सान्नाय्यम् आनुयाजावरः आनुष्टुकः आनुष्टुकः चातुष्प्राश्यः राक्षोघ्नः

वैयातः वैकृतः वारिवस्कृतः आग्रायणः आग्रहायणः सान्तपनः आग्नीध्रसाधारणम् ६ आग्नी-

ध्रम् साधारणम् अवयसमरुद्भ्यां छन्दसि ७ अञ् आवयसेव इत्ते मारुतं शर्द्धः नवसूर्मर्तयविष्टेभ्यो

यत् ८ नव्यम् सूर्यः मर्त्यः यविष्ठ क्षेमाद्यः ९ क्षेम्यस्तिष्ठन् ॥ ओषधेरजातौ ५।४। ३७ ओष-

धि इत्येतस्मादजातौ वर्तमानात् स्वार्थे ऽण् स्यात् औषधं पिबति अजातौ किम् ओषधयः क्षेत्रे भवन्ति

इत्यादि सूत्रद्वयम् केवलभाष्येण व्याख्यातम् ॥ प्रज्ञादिभ्यश्च ५।४।३८ प्रज्ञ इत्येवमादिभ्यः प्रातिप-

दिकेभ्यः स्वार्थे ऽण् स्यात् प्राज्ञः पाणिजः प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदन् षोडन् वि-

द्या मनस् श्रोत्र शरीरे जुह्वत् कृष्णमृगे चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च स

त्वन्तु दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कर्षापण देवता बन्धु प्रज्ञादिः ॥
मृदस्तिकन् ५।४।३९ मृद् इत्येतस्मात्स्वार्थे तिकन् स्यात् मृदेव मृत्तिका ॥ सस्नौ प्रशंसायाम् ५
।४।४० मृद् इत्येतस्मात्प्रशंसोपाधिकात्स्वार्थे स स्न इत्येतौ प्रत्ययौ भवतः प्रशस्ता मृत् मृत्सा मृ
त्स्ना ॥ संख्यैकवचनाच्च वीप्सायाम् ५।४।४३ संख्यावाचिभ्यः एकवचनान्ताच्च कारकाद्वीप्सायोत्या
त्संख्यांशस्वा स्यात् द्वौ द्वौ ददाति द्विशो ददाति एकवचनात् माषं माषं ददाति माषशो ददाति पाद
शः प्रस्थशः संख्यैकवचनात्किम् घटं घटं ददाति वीप्सायां किम् द्वौ ददाति माषं ददाति कारकादि
त्येव द्वयोर्द्वयोः स्वामी माषस्य माषस्य स्वामी भाष्ये तु नेदं व्याख्यानम् ॥ प्रतियोगे पञ्चम्यास्तसिः
५।४।४४ प्रति इत्यनेन कर्मप्रवचनीयेन योगे या पञ्चमी तदन्तात्स्वार्थे वा तसिः स्यात् प्रद्युम्नः कृ
ष्णात्प्रति प्रद्युम्नः कृष्णतः प्रति तसिप्रकरणे आद्यादिभ्य उपसंख्यानम् १ आदौ आदितः अद्यादिभ्य
उपसंख्यानम् १ आदि मध्य अन्त पृष्ठ पार्श्व आद्यादिराकृतिगणः ॥ अपादाने चाहीयरुहोः ५।

५। ४५ अपादाने या पञ्चमी तदन्ताद्वा तसिः स्यात् तच्चेदपादानं हीयरुहोः सम्बन्धि न भवति ग्रामा
दागच्छति ग्रामत आगच्छति अहीयरुहोः किम् ओहाक स्वर्गाद्धीयते ओहाङ् इत्यस्य न निषेधो
यकारनिर्देशात् भूमेरुज्जिहीते भूमित उज्जिहीते रुह पर्वतादवरोहति इत्यादिसूत्रपञ्चकं भा
ष्ये तु न व्याख्यातम् ॥ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ५। ४। ४६ अकर्तरि या तृतीया
तदन्तादतिग्रहे अव्यथने क्षेपे च विषये वा तसिः स्यात् चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते अ
व्यथने चारित्रेण न व्यथते चारित्रतो न व्यथते क्षेपे वृत्तेन क्षिप्तः वृत्ततः क्षिप्तः अतिग्रहेत्यादि किम् वृत्तेन भिन्नः अकर्तरि किम् दे
वदत्तेन निन्दितः तृतीयायाः किम् देवदत्तमतिगृह्णाति ॥ हीयमानपापयोगाच्च ५। ४। ४७
अकर्तरि या तृतीया तदन्ताद्धीयमानेन पापेन च युक्ताद्वा तसिः स्यात् वृत्तेन हीयते वृत्ततो हीयते
चारित्रेण पापः चारित्रतः पापः नौदेपः किन्तु न तत्कथनेनार्थम् अकर्तरीत्येव देवदत्तेन हीयते
हीयमानपापयोगात् किम् वृत्तेन भिन्नः तृतीयाया इत्येव देवदत्तं जहाति ॥ षष्ठ्या व्याश्रये ५। ४। ४८

स०कौ
३५४
354

षष्ठन्ताद्द्वितीयाप्रयोगम्यमानेवातसिः स्यात् देवा अर्जुनतोऽभवन् आदिमाः कर्णतः अर्जुनस्य कर्ण
स्येतिवा व्याश्रये किम् वृक्षस्य शाखा ॥ रोगाच्चापनयने ५।४।४९ रोगवाचिनः षष्ठ्यन्तात्प्रतीका
रेगस्यैवातसिः स्यात् प्रवाहिकायाः कुरु प्रवाहिकातः कुरु अपनयने किम् प्रवाहिकायाः प्र
कोपनम् ॥ कृभ्वस्तियोगे संपद्यकर्त्तरिच्विः ५।४।५० संपद्यकर्त्तरि वर्त्तमानात्प्रातिपदिकात्
डुकृञ् भू अस इत्येतैर्धातुभिर्योगे वाच्विः स्यात् अशुक्लः शुक्लः संपद्यते तं तथा करोति शुक्ली
करोति शुक्लीभवति शुक्लीस्यात् कृभ्वस्तियोगे किम् शुक्लः शुक्लो जायते संपद्यकर्त्तरीति कि
म् कारकान्तरे माभूत् अदेवगृहे देवगृहे संपद्यते द्विविधा वा अभूततद्भावग्रहणम् १ इह माभूत् सं
पद्यन्ते यवाः अभूततद्भाव इति वक्तव्यम् १ प्रकृतिविवक्षाग्रहणं च २ इह माभूत् संपद्यन्तेऽस्मि
न्क्षेत्रे शालयः समीपादिभ्य उपसंख्यानम् २ अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः इत्येष
सूत्रपाठः काशिकायाम् अभूततद्भावग्रहणं वार्त्तिके दृष्टार्थैः सूत्रे प्रक्षिप्तम् इति कैयटः ॥ असंबो १॥

राम
३५४

४।३२ अ इत्येतदन्तस्याङ्गस्य च्विप्रत्यये परे ई इत्ययमादेशः स्यात् शुक्लीकरोति खट्वीभवति खट्वीस्या
त् ॥ च्वौ च ७।४।२६ च्विप्रत्यये परे अजन्तस्याङ्गस्य दीर्घः स्यात् शुक्लीकरोति शुचीभवति पटूस्या
त् ॥ रीङ् ऋतः ७।४।२७ ऋ इत्येतदन्तस्याङ्गस्य इत्येतदादौ प्रत्यये च्विप्रत्यये च परे रीङ् इत्ययमादे
शः स्यात् न तु कृत्सार्वधातुकयोः य मात्रीयति मात्रीयते चेक्रीयते पित्र्यम् च्वि मात्रीकरोति ऋ
न इति तपरकरणं किम् गेहतेर्गिल्यते ॥ ॥ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ५।४।५१ अरुस्
मनस् चक्षुस् चेतस् रहस् रजस् इत्येतेषामन्त्यस्य लोपः स्यात् च्विप्रत्ययश्च अनरुः अरुः सं
पद्यते तं तथा करोति अरूकरोति अरूभवति अरूस्यात् उन्मनीकरोति उन्मनीभवति उन्मनीस्यात्
उच्चक्षूकरोति उच्चक्षूभवति उच्चक्षूस्यात् विचेतीकरोति विचेतीभवति विचेतीस्यात् विरहीकरोति
विरहीभवति विरहीस्यात् विरजीकरोति विरजीभवति विरजीस्यात् इत्यादि लक्षणं भाष्ये तु न व्या
ख्यातम् ॥ विभाषा साति कार्त्स्न्ये ५।४।५२ कार्त्स्न्ये गम्यमाने च्विप्रत्ययविषये साति प्रत्ययो वा स्यात् ।

स॰कौ
३५५
355

अग्निसात्संपद्यते अग्निसात्करोति अग्निसाद्भवति अग्निसात्स्यात् पक्षे अग्नीकरोतीत्यादि बहूनां
व्यक्तेनामेकदेशेनान्यथाभावोऽभिविधिः कार्त्स्न्येन तु एकव्यक्तेः सर्वावयवेनान्यथाभावः ॥ ॥ भवति अ-
ग्नीभवति शस्त्रम् कार्त्स्न्यं किम् एकदेशेन पटः शुक्लीभवति ॥ × अभिविधौ संपदा च ५।४।५३ अ-
भिव्याप्तौ गम्यमानेऽभिविषये सत्यर्थे सम्पद्यतेन तथा तु नायोगे कृभ्वस्तियोगे च वा सातिः स्यात् अग्नि-
सात्संपद्यते अग्निसात्करोति अग्निसाद्भवति अग्निसात्स्यात् पक्षे अग्नीकरोतीत्यादि बहूनां व्यक्ती-
नामेकदेशेनान्यथाभावोऽभिविधिः कार्त्स्न्येन तु एकव्यक्तेः सर्वावयवेनान्यथाभावः ॥ तदधीनवचने
५।४।५४ स्वामिविशेषवाचिनः प्रातिपदिकात्तदधीनत्वेऽभिधेये कृभ्वस्तियोगे संपदा योगे च सातिः
स्यात् राज्ञोऽधीनं करोति राजसात्करोति राजसाद्भवति राजसात्स्यात् राजसात्संपद्यते ॥ ॥
देये त्रा च ५।४।५५ तदधीने देये प्रातिकात्त्रा साति श्चैतौ प्रत्ययौ भवतः कृभ्वस्तियोगे संपदा यो-
गे च ब्राह्मणाधीनं देयं करोति ब्राह्मणत्रा करोति ब्राह्मणत्रा भवति ब्राह्मणत्रा स्यात् ब्राह्मणत्रा

राम
३५५

संपद्यते एवंब्राह्मणात्स्यात् देशे किम् राजसाद्भवति राष्ट्रम् ॥ देवमनुष्यपुरुषमर्त्येभ्यो द्वितीयासप्त
मम्योर्बहुलम् ५।४।५६ देव मनुष्य पुरुष मर्त्य इत्येतेभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च बहुलं
त्रा स्यात् देवान्गच्छति देवत्रा गच्छति मनुष्येषु वसति मनुष्यत्रा वसति पुरुषत्रा पुरुत्रा मर्त्य
त्र बहुलग्रहणादन्यत्रापि बहुत्रा जीवतो मनः ॥ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्
५।४।५७ येनेरनुकरणमनेकाजर्हीत्यभ्वानितियोगे डाच् स्यात् इतिशब्दे तस्मिन्परतस्तु न भवति पट
पटाकरोति भवति स्याहा अव्यक्तानुकरणात् किम् दृषत्करोति ॥ द्व्यजवरार्धात् किम् श्रत्करोति अ
नेकाजिति किम् खरटखरटाकरोति अनितौ किम् पटइतिकरोति स्वरितवायनार्थश्चकारः पटपटा
टासि सचिविलकरणं विशेषणार्थम् ॥ कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ५।४।५८ द्वितीय
तृतीय शम्ब बीज इत्येतेभ्यः कर्षणे वाच्ये कृञ्योगे डाच् स्यात् द्वितीयाकरोति तृतीयाकरोति
द्वितीयं तृतीयं कर्षणं करोतीत्यर्थः शम्बाकरोति अनुलोमकृष्टं क्षेत्रं प्रतिलोमं कर्षतीत्यर्थः बीजा

सि॰कौ ३५९

3580

करोति सहबीजेन कर्षतीत्यर्थः कृतौ किम् द्वितीयं पदं करोति इत्यादिसूत्रनवकं भाष्ये तु न व्याख्यातम् ॥

संख्यायाश्च गुणान्तायाः ५।४।५९ गुणा इत्येतदन्तात्संख्यावाचिनः प्रातिपदिकात्कर्षणे वाच्ये डुड्लाज्प्रत्ययो गेऽज्य च स्यात् द्विगुणा करोति क्षेत्रम् कृषौ किम् द्विगुणां रज्जुं करोति ॥ समयनिष्पत्रादतिव्यथने ५।४।६१ सपत्र निष्पत्र इत्येतस्मादतिक्रमे योगा गम्ये डुड्लाज्प्रत्ययो गेऽज्य च स्यात् सपत्राकरोति मृगं व्याधः सपत्रशरमस्य शरीरे प्रवेशयतीत्यर्थः निष्पत्राकरोति शरीरादपरपार्श्वे निष्क्रामयतीत्यर्थः अतिव्यथने किम् सपत्रं करोति निष्पत्रं करोति भूतलम् ॥ निष्कुलान्निष्कोषणे ५।४।६२ निष्कुल इत्येतदन्तरवयवानां बहिर्निःसारणे गम्ये डुड्लाज्प्रत्ययो गेऽज्य च स्यात् निष्कुलाकरोति दाडिमम् निष्कोषणे किम् निष्कुलान्करोति शत्रून् ॥ सुखप्रियादानुलोम्ये ५।४।६३ सुख प्रिय इत्येताभ्यामानुलोम्ये डुड्लाज्प्रत्ययो गेऽज्य च स्यात् सुखाकरोति प्रियाकरोति स्वामिनम् सुखं प्रियं कुर्वन्नानन्दयतीत्यर्थः आनुलोम्ये किम् सुखं करोति औषधपानम् ॥ दुःखात्प्रातिलोम्ये ५।४।६४ दुःख इत्ये

आनुलोम्य इति यथे ॥

राम

श्याम

तस्मात्प्रातिलोम्ये गम्यमाने डाच् कृञ्योगे स्यात् दुःखाकरोति भृत्यः स्वामिनं पीडयतीत्यर्थः प्रातिलो
म्ये किम् दुःखं करोति ॥ सत्यादशपथे ५।४।६६ सत्य इत्येतस्मादशपथे वर्तमानात् डाच् कृञ्योगे स्या
त् सत्याकरोति वणिग्भाण्डम् केतव्यमिति तथ्यं करोतीत्यर्थः अशपथे किम् सत्यं करोति ॥
॥ इति डाजन्ततद्धितप्रक्रिया ॥ नित्यवीप्सयोः ८।१।४ आभीक्ष्ण्ये वीप्सायां चार्थे वर्तमान
स्य पदस्य द्विर्वचनं स्यात् आभीक्ष्ण्यं पौनःपुन्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च आभीक्ष्ण्यं तिङ् पचति पचति
लुनीहि लुनीहीत्येवायं लुनाति कृत् भुक्त्वा भुक्त्वा व्रजति नानार्थकशब्दाधिकरणानां क्रियागुणाभ्यां
व्याप्तुं युगपत्प्रयोक्तुमिच्छा वीप्सा वीप्सायाम् ग्रामो ग्रामो रमणीयः पुरुषः पुरुषो निधनमुपैति य
तिङ् नित्यग्रहणं प्रकर्षेण च युक्तं तत्र तद्द्विर्वचनात्मकर्मप्रत्ययस्य भवेते इति काशिका पचति पचति
तराम् इति कः पुनर्वीप्सार्थः अनवयवाभिधाने वीप्सार्थः इति भाष्यकाराः साकल्येन द्रव्याणां क्रियागुणाभ्यां
व्याप्तिः पादेनैव वीप्सा फलमित्यर्थ इति कैयटः अनवयवाभिधाने वीप्सार्थ इति चेज्जात्या एकया द्विर्वचन

प्रसङ्गः १ नवैकार्थत्वाज्ज्ञातेरनेकार्थाश्रयत्वाद्वीप्सायाः २ निवर्तकत्वाद्वा ३ सर्वपदव्याप्तिग्रहणा
नर्थकत्वाद्गुणार्थाभिधाने द्विर्वचनविधानात् ४ वीप्सायां सर्वाभिधाने वचनात्प्रसिद्धिः ५ एकाभिधा
ने सर्वव्याप्त्यगतिः ६ नवा पदार्थत्वात् ७ अथेह कथं भवितव्यम् पचतिपचतितरां नि इति आहो
स्वित्पचतितरां पचतितरां नि इतीति पचतिपचतितरां नि इतीति भवितव्यम् इति भाष्यम् ॥ परेर्व
र्जने ८।१।५ परि इत्येतस्य वर्जनेऽर्थे विद्यमानस्य द्विर्वचनं स्यात् परिपरि वङ्गेभ्यो वृष्टो देवः वर्जनम्प
रिहारः वर्जने किम् ओदनं परिषिञ्चति सर्वतोभा— इत्यर्थः परेरसमासे १ उदाहृत परित्रि
गर्तेभ्यो वृष्टो देवः परेर्वर्जने समासे वेति वक्तव्यम् १ इति काशिका ॥ परेर्वर्जने वा वचनम् २ परित्रिग
र्तेभ्यः परिपरित्रिगर्तेभ्यः ॥ उपर्यध्यधसः सामीप्ये ८।१।७ उपरि अधि अधस् इत्येतेषां सामी
प्ये द्योत्ये द्विर्वचनं स्यात् उपर्युपरि दुःखम् दुःखेऽपरिष्टात्समीपकाले दुःखमित्यर्थः उपर्युपरि
ग्रामम् ग्रामस्योपरिष्टात्समीपदेश इत्यर्थः अधि अध्यधि ग्रामम् अधस् अधोऽधो लोकम् समीपेऽधि

ए॰ कौ
३५७
357

राम
३५७

म् उपरिचन्द्रमाः देशकालाभ्यांकृतामन्यासत्तिः सामीप्यम् ॥ वाक्यादेरामन्त्रितस्यासूयासम्म
तिकोपकुत्सनभर्त्सनेषु ८।१।८ असूया सम्मति कोप कुत्सन भर्त्सन इत्येतेषु यद्वाक्यन्तस्यादेः।
सम्बोधनमध्यमान्तस्य द्विर्वचनं स्यात् परगुणाः सहनमसूया पूजनं सम्मतिः क्रोधः कोपः निन्दनं कु
त्सनम् अपकारशब्दैर्भयोत्पादनं भर्त्सनम् एते च मयोक्तधर्माः असूयायाम् अभिरूपक २ अभि
रूपक रिक्तं ते आभिरूप्यम् सम्मतौ अभिरूपक २ अभिरूपक शोभनः खल्वसि कोपे अविनी
तक २ अविनीतक इदानीं ज्ञास्यसि जाल्म कुत्सने पानुक २ पानुक दुष्यानेयतुः भर्त्सने चौर चौ
र २ घातयिष्यामि त्वाम् असूयादिषु स्वरितमाम्रेडिते हृष्टेऽपि एवं पदमस्तु ततः भर्त्सने आम्रेडित
मभर्त्सनद्व्याम्रेडितं तस्यैव वस्तुनः वाक्यादेः किम् मध्यान्तयोर्मा भूत् शोभनः खल्वसि माणवक आ
मन्त्रितस्य किम् उदारो देवदत्तः असूयेत्यादि किम् देवदत्त गामभ्याज शुक्लाम् असूयाकुत्सनयोः
कोपभर्त्सनयोश्चैकार्थ्योऽप्यथङ्निर्देशोऽनर्थकम् २॥ सामन्तैः पाणिनीभिर्द्वन्निगुरवेवानवि पादितैः

स-कौ
३५८
358

स्वालनामत्वयिणोदेवागस्तास्तत्राश्वयिरोमगुणाः ॥ कार्त्तिकेयम् ॥ एकम्बहुव्रीहिवत् ८।१।९ एक
शेषः शाब्दादिरुक्तो बहुव्रीहिवत्स्यात् तेनसुलोपपुम्बद्भावौ एकैकमक्षरम् एकैकयाहुत्या सर्व
नामसंज्ञानिषेधस्वरसमासान्ताः समासाऽधिकारविहिते बहुव्रीहौ विज्ञायन्ते आतिदेशिके बहुव्री
हौ तु न भवन्ति तेनैकैकस्मै इति सिद्धम् इति काशिका एकस्य द्विर्वचनसंबन्धेनेति चेद्षष्ठीनिर्देशः १
कर्त्तव्यश्च निशेषः नवावीप्साधिकारात् २ बहुव्रीहिवत्वप्रयोजनं सुलोपपुंवद्भावौ ३ सुलोपः एकैकम
पुंवद्भावः गतगता सर्वनामस्वरसमासान्तप्रदोषः ४ एकैकस्मै नबहुव्रीहाविति निषेधः प्राप्नो
ति नव स्व नञ्सुभ्यामिति स्वरः प्राप्नोति अकअकः हाः हाः अकस्य व्यारिति समासान्तः प्राप्नो
ति ॥ आबाधे च ८।१।१० आबाधः पीडा तत्संबन्धे यो भाषायां द्वित्वं स्यात् बहुव्रीहिवद्भावश्च भवति
गतंगतः पतितपतितः बहुव्रीहिवद्भावात् स्पोलुक् गतगता नष्टनष्टा सुलोपपुम्बद्भावाः तो
दाततानि विरहात्पीडमानसेदम्बवनम् इदं सूत्रम्भाषाप्रकृतानव्याख्यानम् ॥ कर्मधारयवदुत्तरेषु

गम
३५८

८।१।११ अधिकारोयम् अधिकारप्रदेशः ८।१।१२ एतस्मात्प्रभृत्युत्तरेषु द्विर्वचनेषु कर्मधारयव-
त्कार्यं ज्ञेयम् कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि सुब्लोपः पटुः पटुः पुंव-
द्भावः पटुपट्वी अन्तोदात्तत्वम् पटुःपटुः परवाद्यः स्वरितानुदात्तत्वेन बाध्यते अधिकारा-
न्निर्देशनेऽविशिष्टत्वार्थम् ॥ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ८।१।१३ प्रिय सुख इत्येतयो-
रकृच्छ्रे द्योत्ये द्विर्वा स्यात् कृच्छ्रं दुःखं तदभावोऽकृच्छ्रम् प्रियप्रियेण ददाति प्रियेण ददाति
सुखसुखेन ददाति सुखेन ददाति अतिप्रियमपि वस्तु अनायासेन ददातीत्यर्थः अकृच्छ्रे किम् प्रि-
यः पुत्रः सुखोरतैषः इत्यादि स्वरद्वयन्तु भाष्येन व्याख्यानम् ॥ यथास्वे यथायथम् ८।१।१४ यथास्वे
यथायथा शब्दस्य द्वित्वं नपुंसकत्वञ्च निपात्यते यो यमात्मा यच्चात्मीयं तद्यथायथम् आत्मनि ज्ञा-
ताः सर्वे पदार्था यथायथम् यथास्वभावमित्यर्थः आत्मीये सर्वेषान्तु यथायथम् यथयात्मीय-
मित्यर्थः ॥ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ८।१।१५ रहस्यमर्या-

दावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेष्वर्थेषु द्वन्द्वमिति निपात्यते द्विशब्दस्य द्विर्वच
नम् पूर्वपदस्याम्भावो ऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपातनात् रहस्यं द्वन्द्वशब्दवाच्यम् इतरे वि
षयभूताः रहस्ये द्वन्द्वमन्त्रयते रहस्यमित्यर्थः मर्यादावचने आचतुरं हीमे पशवो द्वन्द्वं मिथुनाय
न्ते माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापीति मर्यादार्थः स्थित्यनतिक्रमो मर्या
दा व्युत्क्रमणे द्वन्द्वं व्युत्क्रान्ताः द्विवर्गसम्बन्धेन पृथगवस्थिता इत्यर्थः पृथगवस्थानं व्युत्क्रमणम्
यज्ञपात्रप्रयोगे द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति अभिव्यक्तौ द्वन्द्वं सङ्कर्षणवासुदेवौ साहचर्येणाद्व
याभिव्यक्तावित्यर्थः द्वन्द्वं युद्धम् द्वन्द्वानि सहते धीरः चार्थे द्वन्द्व इत्यादियोगविभागात्सिध्यति अत
न्तसद्वृत्तिर्लोकाविज्ञाने द्वन्द्वमित्युपसङ्ख्यानम् १ द्वन्द्वमिति पूर्वपदस्याम्भावः २ उत्तरपदस्यात्वा
त्वम् १ नपुंसकत्वं च २ लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकत्वमनिपात्यम् इति भा
ष्यम् ॥ ८८ ॥ इति [illegible]कौमुद्यां द्विरुक्तिप्रक्रिया समाप्ता ॥ ८८ ॥ संवत् १८ [illegible] ॥ ॥

द्वि कौ २५८

राम २५८